# जैमिनीयसूत्रम् ।

अध्यायद्वयात्मकम् ।


वाराणसीस्थरणवीरसंस्कृतपाठशालायां ज्यौतिषशास्त्राध्यापकलब्ध-
ज्यौतिषाचार्यतीर्थोपाधिद्वयपण्डित-ओझोपाह्वरामयत्नशर्म-
विरचितसूत्रार्थप्रकाशिकोपेतम् ।

झोपाभिधपण्डितमुरलीधरशर्मणा संशोधितम् ।



उक्तटीकाकारेणैव

काश्यां

प्राभाकरीयन्त्रालये मुद्रयित्वा प्रकाशितम् ।

सं. १९६१ ।

॥ श्रीः ॥

कीर्त्यप्रकाशितविदिक् विबुधावलिमालया सुसंयुक्तः ।
शास्त्रसुधां वितरिष्यन् काश्यां श्रीमत्सुधाकरो जयति॥१॥

आसीत्काश्यां सकल विबुधैः पुजितो लोकमान्यै-
र्भूभृद्वन्द्यो दशरथसुताराधने दत्तचित्तः ।
लोकेश्यामाचरण इति यः ख्यातसत्कीर्तिधामा
तत्पुत्रोस्ति प्रसरितयशश्श्रीरयोध्याधिनाथः ॥ २ ॥

तदंघ्रिकमलध्यानादवाप्तज्ञानलेशतः ।
उडुदायप्रदीपस्य कृत्वा व्याख्यां सुनिर्मलाम् ॥ ३ ॥
मध्यपारासरीयुक्तां सशाच्विवसुचन्द्रके ।
शाके श्रीरामयत्नेन विश्वनाथे समर्पिता ॥ ४ ॥

लघुपाराशरी नामक फलित ग्रन्थ जो सभी को मालूम है जिसकी भिन्न भिन्न टीकायें छप चुकी हैं परन्तु ऐसी कोई टीका नहीं है जिस्में संस्कृत टीका सरल भाषार्थ सारणी सब एकत्रित हों। अनेक विद्यार्थियों के आग्रह से हमने पण्डित रामयत्न ओझा से संस्कृत तथा भाषाटीका बनवाकर तथा इसके योग विस्तार रूप मध्यपाराशरी सहित प्रकाशित किया। जिसका कि मूल्य ॥ ) आना रक्खा है। इसकी हम विशेष प्रशंसा करना उचित नहीं समझते क्यों-कि "प्रत्यक्षस्य प्रमाणं किम्" आप लोगों के हाथ में इसका प्रमाण उक्त पण्डित जी की बनाई हुई जैमिनीयसूत्र की टीका छुई है॥

पुस्तकप्राप्तिस्थानम्—हरिदास बैजनाथदास
संस्कृत पुस्तकालयाध्यक्ष
कचौड़ीगली बनारस सिटी ॥

बनारस प्रिंटिङ्ग प्रेस

श्रीगणेशाय नमः ।

# जैमिनीयसूत्रम् ।



## सूत्रार्थप्रकाशिकोपेतम् ।



स जयति सिन्धुरवदनो देवो यत्पादपङ्कजस्मरणम् ।
वासरमणिरिव तमसां राशिं नाशयति विघ्नानाम् ॥ १ ॥
भवभीतिहरां चतुर्भुजां सकलार्थप्रतिपत्तिदायिनीम् ।
निजभक्तजनैकपालिकां वरदात्रीं प्रणमामि कालिकाम् ॥ १ ॥
अशरणशरणं दीननाथं वरमतिसहितं कृतवसुचरितम् ।
ज्ञानसुलभ्यं शङ्कररूपं नौम्यवधेशं लब्धधरेशम् ॥ २ ॥

अथ सकललोकोपकारेप्सुः श्रीमज्जैमिनिमहर्षिः प्रारिप्सितग्रन्थे समस्तविघ्नविच्छेदनाय स्वाभीष्टदेवतायाः स्वार्थस्याशंसनं करोति ।

### उपदेशं व्याख्यास्यामः ॥ १ ॥

उः पदं यस्याः सा उपदा तस्याः सम्बोधने हे उपदे श्रीजगदम्बिके । "उकारः शङ्करः प्रोक्तः"-इत्येकाक्षरकोशः । शं लोकानां कल्याणं येन भवति तच्छास्त्रं व्याख्यास्यामः कथयिष्यामः । अथ वा उपदिश्यते प्रकाश्यते प्राक्तनशुभाशुभकर्मानेनेति उपदेशो जातकशास्त्रविशेषस्तं व्याख्यास्यामः कथयिष्यामः ।

यथोक्तम् ।

"यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम् ।
व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव" ॥ १ ॥

अथास्मिन् ग्रन्थेऽन्यशास्त्रतो दृष्टेर्वैलक्षण्यं प्रतिपादयति ।

**अभिपश्यन्त्यृक्षाणि पार्श्वभे च ॥ २ ॥**

"नामैकदेशेन नाममात्रस्यापि ग्रहणम्"-इति न्यायादत्र च-शब्देन चरस्य ग्रहणम् । अर्थात् चकाराच्चराणि ऋक्षाणि अभि यथा स्यात् तथा पार्श्वभे पश्यन्ति । कथं पार्श्वभे पश्यन्ति इत्यत्र वृद्धवाक्यात् सन्देहनिवृत्तिः ।

यथा

"चरं धनं विना स्थाणु स्थिरमन्त्यं विना चरम्" ।
युग्मं स्वेन विना युग्मं पश्यतीत्ययमागमः ॥

पार्श्वभे इति सप्तम्या एकवचनं न तु द्वितीयाया द्विवचनम् । चरस्य पार्श्वयोर्द्वौ राशी । अग्रे स्थिरः पृष्ठे द्विस्वभावः । तेन चरं धनं विना इत्युक्त्वा दक्षिणपार्श्वस्य ग्रहणं कृतमाचार्येण । अर्थाच्चरराशयो दक्षिणपार्श्वस्थं सर्वं स्थिरराशिं पश्यन्ति किन्तु द्वितीयस्थस्थिरं त्यक्त्वा । इत्यनेनैव स्थिरस्यापि दृष्टिः सिद्धा । यतो यदा चरराशिर्द्वितीयं स्थिरं हित्वा सर्वान् स्थिरान् पश्यति तदा स्थिरराशिरपि द्वादशस्थं चरं हित्वा सर्वान् चरान् पश्यति । द्विस्वभावस्तु स्वेन विना सर्वान् द्विस्वभावान् पश्यति । यतस्तत्र यश्चरात्मको भागस्तस्य द्वितीयस्थिररूपो विभागोऽपि तत्रैव वर्त्तते । तथा च यः स्थिरात्मको भागस्तस्य यो द्वादशरूपश्चरविभागः सोऽपि तत्रैव वर्त्तते । तेन स्वशरीरमेव हित्वा सर्वानवशिष्टान् द्विस्वभावान् पश्यति । ऋषिणा तु द्वितीयद्वादशत्यागरूपविशेषस्य प्रसिद्धत्वात् अभि यथा स्यात् तथा पार्श्वभे पश्यन्ति इत्येवमुक्तम् । एवमर्थे स्वीकृते कारिकायाः सूत्रेण सहैक्यं स्यात् । अभि सम्मुखं पार्श्वभे च पश्यन्तीत्यत्र सर्वेषां राशीनां विचित्रं सम्मुखपार्श्वत्वम् । यद्यपि राद्धान्ते तदेव वस्तु सिध्यति तथाऽपि विचारवैलक्षण्यं गौरवम् । यथा चरेऽष्टमपञ्चमैकादशराशयः । तत्राष्टमो राशिः सम्मुखः । पञ्चमैकादशौ पार्श्वौ । स्थिरे षष्ठतृतीयनवमराशयः । तत्र षष्ठराशिः सम्मुखः । तृतीयनवमौ पार्श्वौ । द्विस्वभावे सप्तमचतुर्थदशमराशयः । तत्र

सप्तमो राशिः सम्मुखः । दशमचतुर्थौ पार्श्वौ । विचारदृष्ट्या सम्मुखत्वे पार्श्वत्वे च द्विस्वभावे यो नियमः स एव सर्वत्र भवितुमर्हति । यतः कुण्डल्यां सप्तमस्य सम्मुखत्वमाचार्येणापि स्वीकृतम् । "यथा सामान्यं युग्मे"*-इत्यत्र । पार्श्वराशयस्तु दक्षिणपार्श्वस्तथा द्वितीयतृतीयचतुर्थपञ्चमषष्टराशयो वामपार्श्वस्था द्वादशैकादशदशमनवमाष्टमराशयः । एतेषां मध्यात् चतुर्थदशमौ पार्श्वत्वेन ग्रहणयोग्यौ । परन्तु सुबोधिनीकारेण विचित्रा रीतिः स्वीकृता ।

"स्थिरराशेः षष्ठराशिश्चरस्याष्टम एव सः ।
द्विस्वभावस्य राशिस्तु सप्तमः सम्मुखो मतः" ॥

इति यत् काशिकायामुक्तं तदपि स्वकल्पितमेवेति । दृष्टिचक्रं तु द्विविधम् ।

चतुरस्राकृतिः



वर्त्तुलाकृतिश्च



वर्त्तुलचक्रं निर्माय तत्र द्वादशविभागं कृत्वा राशीन् संस्थाप्य चरादिराशिषु यथोक्तदृष्टिस्थाने सूत्रं नेयम् । एवं कृते सुगमेन चरेऽष्टमपञ्चमैकादशराशयो दृग्योग्या भवन्ति । स्थिरे षष्ठतृतीयनवमराशयो दृग्योग्या भवन्ति । द्विस्वभावे सप्तमचतुर्थदशमराशयो दृग्योग्या भवन्तीति सर्वेषां सिद्धम् ॥ २ ॥

ग्रहदृष्टिं दर्शयति ।

## तन्निष्ठाश्च तद्वत् ॥ ३ ॥

तन्निष्ठास्तेषु चरादिराशिषु स्थिताः ग्रहाश्च तद्वत् तै राशिभिस्तुल्य

* द्रष्टव्यमस्यैव ग्रन्थस्य २ अ. ४ पा. २३ सू. ।

स्वस्थितराशिवदेव पश्यन्ति । चरराशिषु गता ग्रहा द्वितीयस्थं राशिं ग्रहं च हित्वा सर्वान् स्थिरराशीन् स्थिरस्थग्रहाँश्च पश्यन्तीत्यर्थः । एवमेवाग्रेऽपि बोध्यम् ।

अत्रापि पूर्वकारिकानुरूपमेव वृद्धवाक्यम् ।

"चरस्थं स्थिरगः पश्येत् स्थिरस्थं चरराशिगः ।
उभयस्थं तूभयगो निकटस्थं विना ग्रहम्"-इति ॥ ३ ॥

अथ "पत्नी लाभयोर्दिष्ट्या निराभासार्गलया"*इत्यादि सूत्रेषु अर्गलशब्दबोध्यपदार्थं दर्शयति ।

## दारभाग्यशूलस्थाऽर्गला निध्यातुः ॥ ४ ॥

निध्यातुर्द्रष्टुर्ग्रहाद्दारभाग्यशूलस्था अर्गला भवति । अर्थान्निध्यातुः सकाशाद्दारभाग्यशूलस्थाश्च तुर्यद्वितीयैकादशस्थानस्थिता ग्रहा अर्गलायोगकर्त्तारो भवन्ति । यत् तु सुबोधिनीकारेण "विचाराश्रयीभूतस्य राशेर्निध्यातुर्द्रष्टृग्रहात् दारभाग्यशूलस्था दारादिपदबोध्यचतुर्थद्वितीयैकादशस्थानस्थिता ग्रहा विचाराश्रयीभूतराशिद्रष्टुर्ग्रहस्य अर्गला अर्गलसंज्ञका अर्गलाकर्त्तारः" इत्यनेन द्रष्टृग्रहोपरि अर्गला भवति इति यदुक्तं तदसङ्गतम् । एवं चेत् तदा दारभाग्यशूलस्थार्गलाग्रहात् इत्येवं सूत्रं प्रणीतं स्यात् । निध्यातुरिति प्रयोगान्निध्यातुः सकाशाद्यदि एतत्स्थानगता ग्रहा भवन्ति तदाऽर्गला भवति इत्येवार्थः सङ्गच्छते । ऋषिणाऽप्येतदाशयेनैव "पत्नीलाभयोर्दिष्ट्या निराभासार्गलया"-इति उक्तम् । तेन भावोपर्येवार्गला भवति न तु ग्रहस्योपरि ।

"भयपुण्यविनाभावा द्रष्टुराहुः शुभार्गलम्"-इति ।

वृद्धवाक्यात् निध्यातुरिति पदस्य द्रष्टुरित्यर्थो युक्तो न फलदातुः । ऋषिणा स्वकीये ग्रन्थे अर्गलाविरोधी चेति पदद्वयं शुभार्गलविपरीतार्गल-

---

* द्रष्टव्यमस्यैव ग्रन्थस्य १ अ. ३ पा. २२ सू. ।

स्थाने दत्तम् । अन्यथा "शुभार्गलमर्गलाविप्रतिबन्धकत्वं तथाऽर्गलविरोध्य-र्गलमेव विपरीतार्गलम्"-इत्यर्थे स्वीकृते अर्गलाप्रतिबन्धकः शुभार्गला विपरीतार्गला चेति प्रकारचतुष्टयमुत्पद्यते। यत् तु "छन्दोवत् सूत्राणि"-इत्याद्युक्तेरत्र सन्धिश्छान्दस इति नीलकण्ठेनोक्तं तदसमीचीनम् । यतोऽर्गलशब्दस्य स्त्रीलिङ्गे नपुंसके च पाठः । यथा "पत्नीलाभयोर्दिष्ट्या निराभासार्गलया" इत्यत्र स्त्रीलिङ्गे पाठः शुभार्गले धनसमृद्धिरित्यत्र ।

"भयपुण्यविनाभावा द्रष्टुराहुः शुभार्गलम्" ।

इत्यत्र च नपुंसके पाठः । तेन दारभागशूलस्थार्गला निध्यातुरित्यत्र अर्गलाशब्दस्य स्त्रीलिङ्गत्वकल्पने निध्यातुर्द्रष्टुर्ग्रहात् दारभाग्यशूलस्था अर्गला भवति-इत्यस्मिन्नर्थे संहितायां न दोषः । तर्हि यदि सुगमेन दोषनिर्वाहः स्यादेव तदा कथं व्यर्थदोषारोपणम् । अस्मिन् ग्रन्थे कटपयादिक्रमेणाङ्का ग्राह्याः । "सर्वत्र सवर्णाभावराशयः"-इत्युक्तत्वात् ।

वृद्धकारिका च ।

"कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः ।

नञे च शून्यं ज्ञेये तथा स्वरे केवले कथितम्"-इति ।

तत्र द्वादशाधिके द्वादशतष्टं कृत्वा शेषेण राशिभावबोधः कार्यः । यथा दारेत्यत्र "अङ्कानां वामतो गतिः"-इत्यनेन दकारस्याष्टसंख्या रेकारस्य द्विसंख्या अष्टाविंशतिमिते द्वादशतष्टे शेषं चतुर्मितं भावबोधकमित्यादि । इयमर्गला शुभग्रहेण यथा भवति तथैव पापग्रहेणापि । तेन शुभपापोभयसाधरणीत्यलम् ॥ ४ ॥

अथान्यमर्गलायोगमाह ।

## कामस्था तु भूयसा पापानाम् ॥ ५ ॥

पूर्वसूत्रान्निध्यातुरिति पदमनुवृत्य निध्यातुः कामस्था तृतीयस्थानस्था याऽर्गला सा तु पापानां भूयसा बाहुल्येन भवति । पापग्रहाः शुभग्रहाश्च वृद्धेनोक्ताः ।

यथा ।

"अर्कारमन्दफणिनः क्रमात् क्रूरा यथाऽऽश्रयम् ।
चन्द्रोऽपि क्रूर एवात्र क चिदङ्गारकाश्रये ॥
गुरुध्वजकविज्ञाः स्युर्यथापूर्वं शुभग्रहाः" ।

एतेषां पापानां भूयसा बाहुल्येनार्गला भवत्यर्थाद्यदि त्रिप्रभृतिभिः पापैः कामस्थैस्तदाऽर्गला भवति । एकेन द्वाभ्यां च नेत्यर्थः । प्रश्ननिधिपण्डितैस्तु "निध्यातुर्द्रष्टुर्गृहात् कामस्था याऽर्गला सा तु पापानां मध्ये यो गृहो भूयसाऽधिकांशमालम्ब्य स्थितस्तेन भवति"-इति यदुक्तं तदसङ्गतम् । भूयसा इति पदेन पापबाहुल्यमेवायाति नांशबाहुल्यम् । तृतीयस्थानोद्भवाया अर्गलाया बहुपापकृतत्वात् तथा निर्बाधकत्वाच्चेदं पृथक् सूत्रम् । अथ वा पापानां सम्बन्धेन कामस्था तृतीयस्थानस्था याऽर्गला सा भूयसा बलयुक्ता भवति बाधकरहिता इत्यर्थः । अयमप्यर्थो युक्तियुक्त इति ॥ ५ ॥

पूर्वार्गलाबाधकानाह ।

## रिष्फनीचकामस्था विरोधिनः ॥ ६ ॥

निध्यातुर्द्रष्टुर्गृहात् रिष्फनीचकामस्था दशमद्वादशतृतीयस्थानस्था गृहा विरोधिनोऽर्थात् दारभाग्यशूलस्थितानामर्गलाकर्तॄणां खेटानां क्रमेण रिष्फनीचकामस्था गृहा विरोधिनो भवन्त्यर्थादर्गलयोगभङ्गकरा भवन्ति । अनेनेदमुक्तं भवति । यदि दशमादिस्थानेषु गृहाभावश्चेत् तदा चतुर्थादिस्थानस्थैर्ग्रहैरर्गला भवति नान्यथा ।

वृद्धकारिका च ।

"*भयपुण्यविनाभावा द्रष्टुराहुः शुभार्गलम् ।
स्फुटगज्ञेयभावास्तु विपरीतार्गलं विदुः"-इति ॥ ६ ॥

---

* भयम् २ । पुण्यम् ११ । विनः ४ एवम् । स्फुटम् १२ । गः ३ । ज्ञेयम् १० ।

अत्रापवादमाह ।

## न न्यूना विबलाश्च ॥ ७ ॥

ये ग्रहाः प्रतिबन्धकस्थाने स्थिता अर्गलाकर्तृग्रहेभ्यो न्यूना विबला निर्बलाश्च ते प्रतिबन्धका न स्युः । अर्थादर्गलाकर्तृग्रहेभ्यः प्रतिबन्धका ग्रहाश्चेद्यदि न्यूना अल्पसंख्यका स्त्रयश्चेदर्गलाकर्तारो द्वौ चेत् प्रतिबन्धकौ द्वौ यद्यर्गलाकर्तारौ । एकः प्रतिबन्धकस्तदा एवं प्रतिबन्धका न स्युः । तथा ये वक्ष्यमाणप्रकारेण निर्बलास्तेऽपि प्रतिबन्धका न स्युः केचिदेवं व्याचक्षते । बलप्रकरणे "अग्रहात् सग्रहो ज्यायान्" इत्युक्तं तदा यो ग्रहोऽल्पसंख्यकः स निर्बलः । तेन न विबला इत्यनेनैव कार्यनिर्वाहे न न्यूना इति कथम् । अत्रोच्यते । उच्चस्थितः स्वगृहगश्च ग्रहोऽल्पसंख्ययाऽपि बली भवति तत्रैवोक्तमस्ति "स्वामियोः"-इत्यादिः । तेन न न्यूना विबलाश्चेत्येव सुवचम् । अत्रेदमवधेयम् । यदि अर्गलाकर्तृग्रहा अधिकाः प्रतिबन्धका ग्रहान्न्यूनास्तदा प्रतिबन्धकग्रहसंख्यातुल्यग्रहसंख्यार्गलाकर्तृग्रहेभ्यो निर्बलक्रमेण विशोध्य शेषेणार्गलायोगो वाच्यः । एवं प्रतिबन्धकेऽपि इति ॥ ७ ॥

अथान्यामर्गलामुपदिशति ।

## प्राग्वत् त्रिकोणे ॥ ८ ॥ विपरीतं केतोः ॥ ९ ॥

अस्मिन् ग्रन्थे एकस्यैव भावस्यापेक्षायां संख्याप्रकारेण भावबोधनं कर्त्तव्यम् । बहुभावानामपेक्षासत्त्वे शास्त्रान्तरप्रसिद्धकेन्द्रत्रिकोणोपचयादिबोधकस्थानेभ्योऽपि व्यवहारः कार्यः । त्रिकोणे निध्यातुर्द्रष्टृग्रहात् पञ्चमनवमयोः प्राग्वदर्गलाप्रतिबन्धकश्च । अर्थात् पञ्चमे ग्रहसत्त्वेऽर्गला । नवमे न्यूनसंख्यात्वनिर्बलत्वदोषरहितग्रहसत्त्वे तत्प्रतिबन्धकः । परन्तु केतोर्ग्रहात् विपरीतमर्थात् केतुर्यदि द्रष्टा चेत् तदा तस्मान्नवमे स्थिता ग्रहा अर्गलाकर्तारो भवन्ति । तथा पञ्चमे स्थिता ग्रहास्तत्प्रतिबन्धकाः । अत्र केतुपदं राहोरपि बोधकम् । राहुकेत्वोर्गतिसाम्यात् । न च दारेत्यादि सूत्रे पञ्चमपदबोधकशान्तादिपदस्य रिष्फेत्यादिसूत्रे नवमपदबोधकस्य धान्तादि-

पदस्योपादानात् पञ्चमनवमरूपार्थलाभे सूत्रान्तरनिर्माणस्य व्यर्थापत्तिरिति वाच्यम् । विपरीतमिति सूत्रस्यात्रैव प्रवृत्तेः । विपरीतमिति सूत्रं कैश्चित् सार्वत्रिकमुक्तं तदपि न । दारभाग्यशूलेषु शान्तपदं रिष्फेत्यादिसूत्रेषु धान्तपदं दारभाग्यशूलानन्तरं रिष्फेत्यादिसूत्रं रिष्फेत्यादिसूत्रानन्तरं विपरीतमिति सूत्रं चेत् तदा सार्वत्रिकं स्यात् । अन्यथा प्राग्वदिति सूत्रानन्तरमस्य सूत्रस्य प्रणयनात् तत्रैवास्य प्रवृत्तिरिति । यत् तु प्राग्वदिति सूत्रस्य पृथक्करणादप्रतिबन्धेऽप्यर्गला इत्युक्तं तदपि न । एवं चेत् तदा प्राग्वदिति पदं व्यर्थं स्यात् । त्रिकोणेऽर्गला इत्येव सूत्रं प्रणीतं स्यात् । तथा यदि कामस्थेति सूत्रानन्तरं प्राग्वत् त्रिकोणे इति सूत्रं चेत् तदाऽप्रतिबन्धाऽर्गला स्यात् तथा तत्र प्राग्वदिति पदस्य त्रिकोणे प्राग्वत् शुभपापविशिष्टाऽर्गला भवति एवंविधोऽर्थो भवेत्-इति ॥ ८-९ ॥

अस्मिन् ग्रन्थे कारकस्यैव प्राधान्यात् कारकाद्विशेषफललाभाच्च कारकग्रहान् विवक्षुरादावात्मकारकं दर्शयति ।

## आत्माधिकः कलादिभिर्नभोगः सप्तानामष्टानां वा ॥ १० ॥

अथात्र "देहलीदीपक"-न्यायेन विपरीतं केतोरिति सूत्रमनुवर्त्तते । सप्तानां कारकाणां वाऽष्टानां कारकाणां विचारे यो नभोगः कलादिभिः कलाया आद्ययोऽंशास्तैरंशेऽधिकः स आत्मा आत्मकारकः केतोर्विपरीतम् । अत्र केतुशब्दो राहोर्वाचकः । वृद्धवाक्ये भागशब्देनांशपदस्य प्रसिद्धत्वादृषिणा कलादिभिरित्युक्तम् । अर्थाद्यत्र ग्रहाणां ग्रहयोर्वा मध्येऽंशतुल्यता चेत् तदा कलादिस्थानेन योऽधिकः स आत्मकारको भवति । अत्र ग्रन्थे सप्तानां कारकाणां दर्शनाद्रव्यादिशन्यन्तानां सप्तानां ग्रहाणां मध्ये यो ग्रहोऽंशादिभिरधिकः स आत्मा । अष्टानां वा इति तु मतान्तरेणाष्टमकारकबोधको विकल्पेन राहोर्बोधकश्च । अर्थात् कैश्चिदाचार्यैरष्टौ कारकाः प्रोक्ताः । तेषां मते पितृकारको विशेषः । तत्र राहोरपि ग्रहणम् । अथ वा केचिदाचार्या मातृकारकग्रहेणैव पुत्रकारकस्यापि विचारं कुर्वन्ति । ऋषिणाऽप्युक्तम् ।

"मात्रा सह पुत्रमेके समामनन्ति" तत्र षट्कारकस्यैव ग्रहणात् सप्तकारकग्रहणे पुत्रकारकस्थाने पितृकारकं वदन्ति । ऋषेस्तु सप्तकारकग्रहणरूप एवाशयः । अष्टानां वा इत्यनेन अंशन्यूनत्वे आत्मकारकत्वेन प्रकारान्तरेण राहुर्गृह्यते इति तु वर्त्तमाना रीतिः । अत्र वृद्धसम्मतिः ।

"भागाधिकः कारकः स्यादल्पभागोऽन्यकारकः ।
मध्यांशो मध्यखेटः स्यादुपखेटः स एव हि" ॥

अस्यार्थः । यो ग्रहो भागाधिकः । अत्र भागशब्दमुपलक्षणम् । अर्थादंशादिभिरधिकः स कारक आत्मकारक इति अल्पभागः सर्वग्रहापेक्षया न्यूनांशः स चान्यकारको दारकारकः । मध्यांशो मध्यमांशमालम्ब्य स्थितः कारकादंशन्यूनत्वेन चतुर्थो ग्रहो मध्यखेटो मातृकारकः स एव उपखेटश्च । केचित् तु ग्रहयोर्ग्रहाणां वा यत्र भागादिसाम्यं तत्र यो बली स आत्मा अन्य उपखेट इति वदन्ति तत्र मूलमन्वेष्यम् । मन्मते तु अंशसाम्ये यो बली स आत्मा यस्तु निर्बलः स तदन्यकारक इति । राहोर्न्यूनांशत्वेनात्मकारकत्वं स्यादिति वृद्धेनापि प्रतिपादितम् ।

"मेषाद्यसव्यमार्गेण राहुकेतू न कारकौ" ।

अस्यार्थः । सव्यं वाममसव्यं दक्षिणं तेन मेषादिक्रममार्गेण राहुकेतू कारकौ न भवतः । विपरीतमार्गेण तु भवत एव । अत्र केतोर्ग्रहणं कार्यान्तरार्थम् । राहुकेत्वोरंशादिसाम्येन कारकान्तराभावात् । श्रीमता सुबोधिनीकारेण "अंशपदं विहाय कलादिपदेन निर्देशस्तु अंशसाम्ये कलाधिकः येति ज्ञानार्थम् । कलादिभिरपि साम्ये वक्ष्यमाणवलेनैकतरनिर्णयः"-इत्युक्त्वा पुनः "द्वित्र्यादिग्रहाणामंशादिसाम्येन कारकलोपे बलवत्स्थिरकादेव तत्तद्विचारः कर्त्तव्यः" इत्यादि यदुक्तं तदसङ्गतम् । यदा बलविशेषेण कारकनिश्चयो जातस्तदा पुनः स्थिरकथनं न युक्तम् । कारकलोपाभावात् । अत्र राशिकृतमाधिक्यं न ग्राह्यम् । भागाधिक इत्युक्तत्वात् । अत्र बृहत्पाराशरहोरासारांशवाक्यम् ।

"अथाग्रे सम्प्रवक्ष्यामि ग्रहाणां कारकान् द्विज ।
आत्मादिकारकान् सप्त यथावत् कथयामि ते ॥
रव्यादिशनिपर्यन्ता भवेयुः सप्त कारकाः ।
अंशैः साम्यौ ग्रहौ द्वौ चेद्राह्वन्तान् गणयेद्द्विज ॥
रव्यादिपङ्गुपर्यन्तमंशाधिकग्रहोऽपि चेत् ।
कारकेन्द्रोऽपि स ज्ञेयश्चात्मा कारक उच्यते ॥
अंशसाम्यग्रहो यत्र कलाधिक्यं च पश्यति ।
कलासाम्ये पलाधिक्यमात्मकारक ईर्यते ॥
तत्र राशिकलाधिक्ये नैव ग्राह्यः प्रधानकः ।
अंशाधिक्ये कारकः स्यादल्पभागोऽन्त्यकारकः ॥
मध्यांशो मध्यखेटः स्यादुपखेटः स एव हि ।
अधोऽधः कारका ज्ञेया एवं स्युः सप्त कारकाः ॥
तेषां मध्ये प्रधानस्तु अत्मकारक उच्यते ।
जातकेशः स विज्ञेयः सर्वेषां मुख्यकारकः ॥
यथा भूमौ प्रसिद्धोऽस्ति नराणां क्षितिपालकः ।
सर्ववार्त्ताधिकारी च वधकृन्मोक्षकृत् तथा ॥
पुत्रामात्यप्रजानां तु तत्तद्दोषगुणात् तथा ।
वन्धकृन्मोक्षकृद्विप्र तथा सन्मानकारकः ॥
तथैव कारको राजन् ग्रहाणां फलकारकः ।
आत्मेत्यादिफलं नैव चान्यथा स्थापयेद्द्विज ॥
यथा राजाज्ञया विप्र पुत्रामात्यादयोऽपि च ।
समर्था लोककार्येषु तथैवान्योपकारकः"-इति ॥ १० ॥

अथात्मकारकस्य किञ्चिद्गुणविशेषं दर्शयति ।

## स ईष्टे वन्धमोक्षयोः ॥ ११ ॥

स आत्मकारको बन्धमोक्षयोरीष्टे स्वामी भवति । अर्थात् नीचपाप-युक्तः कारकः स्वदशान्तर्दशासु बन्धनादिदुःखदः स्यात् । उच्चस्थः शुभ-

संयुक्तः कारकः स्वदशान्तर्दशासु योगान्तराववृद्धस्यापि मोक्षकर्त्ता स्यात् । अथ वा पूर्वलक्षणयुक्तः कारको नीचकर्मप्रवृत्तिद्वारा संसाररूपबन्धनदः स्यात् । द्वितीयलक्षणाक्रान्तः कारको ज्ञानकाशीवासादिभिर्मोक्षकर्त्ता स्यात् इति ॥ ११ ॥

अथामात्यादिकारकान् दर्शयति ।

**तस्यानुसरणादमात्यः ॥ १२ ॥ तस्य भ्राता ॥ १३ ॥ तस्य माता ॥ १४ ॥ तस्य पुत्रः ॥ १५ ॥ तस्य ज्ञातिः ॥१६॥ तस्य दाराश्च ॥ १७ ॥**

तस्यात्मकारकस्यानुसरणात् पश्चाद्गमनादमात्योऽमात्यकारको भवति। अर्थादात्मकारकान्न्यूनांशो ग्रहोऽमात्यः । एवमेवाग्रेऽपि व्याख्येयम् ॥ १२ ॥ तस्यात्मकारकान्न्यूनांशो भ्रातृकारकः ॥ १३ ॥ भ्रातृकारकान्न्यूनांशो मातृकारकः ॥ १४ ॥ मातृकारकान्न्यूनांशः पुत्रकारकः ॥ १५ ॥ पुत्रकारकान्न्यूनांशो ज्ञातिकारकः ॥ १६ ॥ ज्ञातिकारकान्न्यूनांशो दारकारकः । चकारस्त्वन्यकारकाभावसूचकः । तथा स्थिरकारकपदोपपदादिभ्योऽपि एतेषां विचारः कार्यं इति सूचकश्चेति ॥ १७ ॥

अथ स्वमतं प्रदर्श्यान्यमतं दर्शयति ।

**मात्रा सह पुत्रमेके समामनन्ति ॥ १८ ॥**

एके बहव आचार्याः मातृकारकग्रहेणैव पुत्रस्यापि विचारं कुर्वन्ति । स एव मातृपुत्रकारकयोरैक्यात् सप्तकारकाभावात् पुत्रकारकस्थाने तस्य-पिता इति सूत्रं वर्णयन्ति। क्वचित् पुस्तकेषु मातृकारकान्न्यूनांशः पितृकारको भवतीति दृष्टं तदसङ्गतम् । आदौ मातृकारकनिरूपणस्यायोग्यत्वात् ॥१८॥

अथ स्थिरकारकान् दर्शयति ।

**भगिन्यारतः श्यालः कनीयान् जननी च ॥ १९ ॥**

आरतो भौमात् भगिनी श्यालो लघुभ्राता माता च एतेषां विचारः कार्यः ॥ १९ ॥

मातुलादिकारकमाह ।

## मातुलादयो बन्धवो मातृसजातीया इत्युत्तरतः ॥ २० ॥

उत्तरतो भौमादुत्तरतो बुधात् मातुलादयो बन्धवस्तथा मातृसजातीया मातृष्वसृपितृपत्न्यादयो विचार्याः ॥ २० ॥

पितामहादिकारकमाह ।

## पितामहः पतिपुत्राविति गुरुमुखादेव जानीयात् ॥ २१ ॥

गुरुमुखाद्गुर्वादिभ्यः क्रमेण पितामहः पतिपुत्रौ इति जानीयात् अर्थात् गुरोः पितामहः शुक्रात् पतिः शनेः पुत्र इति जानीयात्। अग्रिमसूत्रे पतिः "पत्नी पितरौ श्वसुरौ मतामहाः"-इत्यादि न च वाच्यम्। शनेः पुत्र इति तृतीयसूत्रनिर्माणापेक्षेया तथैव सुवचत्वम्। शेषं शुक्रफलमग्रिमसूत्रे निबद्धम् ॥२१॥

## पत्नी पितरौ श्वसुरौ मातामहा इत्यन्तेवासिनः ॥ २२ ॥

अन्तेवासिनोऽर्थात् गुरोरन्तेवासिनः शुक्रात् पत्न्यादयो विचार्या इति। अथात्र प्रसङ्गादन्येऽपि कारकाः संगृह्य लिख्यन्ते ।

"स्वर्क्षतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्त आश्रिताः ।
सर्व एव तेऽन्योन्यकारकाः कर्मगस्तु तेषां विशेषतः ॥
कर्कटोदयगतो यथोडुपः स्वोच्चगाः कुजयमार्कसूरयः ।
कारका निगदिताः परस्परं लग्नगस्य सकलोऽम्बराम्बुगः ॥
स्वभकोणोच्चगो हेतुरन्योन्यं यदि कर्मगः ।
सुहृत्तद्गुणसम्पन्नः कारकश्चापि स स्मृतः" ॥

अथात्र 'भगिन्यारतः'इत्यादिसूत्राणि प्राचीनैर्दिङ्मात्रेण दर्शितानि ।

"कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वं कुजो ज्ञो वचो
जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः ।
राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः
सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ॥
रक्तः श्यामो भास्करो गौर इन्दुर्नात्युच्चाङ्गो रक्तगौरश्च वक्रः ।
दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः॥
वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता
वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथाः क्रमात् ।
प्रगाद्या रविशुक्रलोहिततमःसौरेन्दुवित्सूरयः
क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः ॥
बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नराश्च शेषाः ।
क्षितिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः क्रमेण ॥
विप्रादितः शुक्रगुरू कुजार्कौ शशी बुधश्चेत्यसितोऽन्त्यकानाम् ।
चन्द्रार्कजीवा ज्ञसितौ कुजार्की यथाक्रमं सत्त्वरजस्तमांसि ॥
मधुपिङ्गलदृक् चतुरस्रतनुः पित्तप्रकृतिः सवितारल्पकचः ।
तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्च शशी मृदुवाक् शुभदृक् ॥
क्रूरदृक् तरुणमूर्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः ।
श्लिष्टवाक् सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च ॥
बृहत्तनुः पिङ्गलमूर्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः ।
भृगुः सुखी कान्तवपुः सुलोचनः कफानिलात्मासितवक्रमूर्धजः ॥
मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः स्थूलद्विजः परुषरोमकचोऽनिलात्मा।
स्नाय्वस्थ्यसृक्त्वगथ शुक्रवसे च मज्जा मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः ॥
देवाम्ब्वग्निविहारकोशशयनक्षित्युत्करेशाः क्रमाद्-
वस्त्रं स्थूलमभुक्तमग्निकहतं मध्यं दृढं स्फाटितम् ।
ताम्रं स्यान्मणिहेमयुक्तिरजतान्यर्काच्च मुक्तायसी
द्रेक्काणैः शिशिरादयः शशिरुचज्ञग्वादिषूद्यत्सु वा ॥

अयनक्षणवासरर्त्तवो मासोऽर्थं च समाश्च भास्करात् ।
कटुकलवणतिक्तमिश्रिता मधुराम्लौ च कषाय इत्यपि ॥

अन्तःसारान् जनयति रविर्दुर्भगान् सूर्यसूनुः
क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च भौमः ।
वागीशज्ञौ सफलविफलान् पुष्पवृक्षांश्च शुक्रः
स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रश्च भूयः ॥

शुभोऽशुभर्क्षे रुचिरं कुभूमिजं करोति वृक्षं विपरीतमन्यथा ।
परांशके यावति विच्युतः स्वकाद्भवन्ति तुल्यास्तरवस्तथाविधाः ॥

चाण्डालजातिस्त्वथ सैंहिकेयः केतुश्च जात्यन्तरमत्र मान्दिः ।
राहोः केतोश्च मान्देश्च सर्वस्थानमुदाहृतम् ।

कथा फणीन्द्रस्य तु चित्ररूपा केतोर्महाच्छिद्रयुता विशेषात् ।
राहोस्तु शीशं शिखिनस्तु नीलं धरामणीतं कथयन्ति तज्ज्ञाः ॥

चित्राम्बरं देवगुरोर्भृगोस्तु क्षौमाम्बरं भास्करस्येन्द्रगोपम् ।
शुक्लं क्षौमं रात्रिनाथस्य चान्द्रेः श्यामं क्षौमं रक्तचित्रं कुजस्य ॥

वस्त्रं चित्रं पट्टवस्त्रं शनेस्तु नीलं राहोर्जीर्णचित्रान्वितं च ।
रूपान्वितं तद्वसनं च केतोः बलान्वितानां तु वदेद्ग्रहाणाम् ॥

भृगोर्वसन्तः क्षितिसूनुभान्वोर्ग्रीष्मः शशाङ्कस्य ऋतुः प्रवर्षाः ।
विदुः शरद्देवगुरोस्तु हैममृतुः शनेः स्याच्छिशिरस्तु कालः ॥

धातुग्रहा राहुशनीन्दुभौमाः मूलग्रहौ शुक्रदिनाधिनाथौ ।
जीवग्रहौ जीवशशाङ्कसूनू संवर्णयन्ति स्फुटमेव शास्त्रे ॥

अधुना सम्प्रवक्ष्यामि स्थिराणि कारकाणि च ।
सूर्यादीनां ग्रहाणां च वीर्यवान् कारको भवेत् ॥

वीर्यवान् जायते विप्र जन्मनि रविशुक्रयोः ।
स पितृकारको ज्ञेयो निर्विशङ्कं द्विजोत्तम ॥

चन्द्रारयोश्च बलवान्मातृकारक उच्यते ।

आर्यम्णः पुण्यभे तात इन्द्रोर्माता च तुर्यतः ॥
कुजात् तृतीयतो भ्राता बुधात् तुर्ये च मातुलः ।
देवेज्यात् पञ्चमात् पुत्रो दैत्येज्याद्द्यूनगात् स्त्रियः ॥
शनेरष्टमतो मृत्युरित्थं तातादिकारकाः
अधुना संप्रवक्ष्यामि विशेषं भावकारकम् ।
जनुर्लग्नं च विद्याद्वै आत्मकारकमेव च
एकादशे ज्येष्ठभ्राता तृतीये तु कनिष्ठकः ॥
सुते सुतं विजानीयात् तथा सप्तमभावतः
सुतस्थाने ग्रहस्तिष्ठेत् सोऽपि कारक उच्यते ।
सूर्यो गुरुः कुजः सोमो गुरुर्भौमौ सितः शनिः
गुरुश्चन्द्रसुतो जीवो मन्दश्च भावकारकः ॥

अस्मद्गुरुचरणास्तु ।

"रविर्जीवो भूजः शशिशशिसुतौ वासवगुरुः
दिनेशापत्यारी दनुजकुलपूज्यो रविसुतः ।
रवीज्यौ मन्दज्ञार्कसुरगुरवो देवपगुरुः
शनिः प्रोक्ता इत्थं तनुभवनतः कारकखगाः" ॥

अथान्यप्रकारेण कारकाः ।

"मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाधिपः ।
बुधः कन्यामिथुनयोः कर्कस्वामी तु चन्द्रमाः ॥
स्यान्मीनधन्विनोर्जीवः शनिर्मकरकुम्भयोः ।
सिंहस्याधिपतिः सूर्यः कथितो गणकोत्तमैः" इति ॥

अत्रेदमवधेयम् । लग्नाष्टमयोर्भौमः । द्वितीयसप्तमयोः शुक्रः । तृतीयषष्ठयोर्बुधः । चतुर्थस्य चन्द्रमाः । नवमद्वादशयोर्जीवः । दशमैकादशयोः शनिः । पञ्चमस्य सूर्यः । एवं ग्रहाः कारका भवन्ति इति ।

अन्यच्च ।

"सूर्यादात्मपितृप्रभावनिरुजा शक्तिः श्रियश्चिन्तये-

रचेतो वुद्धिनृपप्रसादजननी सम्पत्करश्चन्द्रमाः ।
सत्त्वं रोगगुणानुजावनिसुताज्ज्ञातीश्वरासुनुना
विद्यावन्धुविवेकमातुलसुहृद्वाक्कर्मकृद्वोधनः ॥
प्रज्ञावित्तशरीरपुष्टितनयज्ञानानि वागीश्वरात्
पत्नीवाहनभूषणानि मदनव्यापारसौख्यं भृगोः ।
आयुर्जीवनमृत्युकारणविपत्सम्पत्प्रदाता शनिः
सर्पेणैव पितामहं तु शिखिना मातामहं चिन्तयेत् ॥
द्युमणिरमरमन्त्री भूसुतः सोमसौम्यौ
गुरुरिनतनयारौ भार्गवो भानुपुत्रः ।
दिनकरदिविजेज्यौ जीवभानुज्ञमन्दाः
सुरगुरुरिनसुनुः कारकाः स्युर्विलग्नात्"-इति ॥

अथ कारकत्वे द्वित्र्यादिग्रहाणामंशादिसाम्ये कारकयोगादिवलतुल्यत्वे निर्णयार्थं निसर्गवलमाह ।

## मन्दोऽज्यायान् ग्रहेषु ॥ २३ ॥

ग्रहेषु रव्यादिसप्तसु ग्रहेषु मन्दः शनिः अज्यायानतिदुर्वलः । अत्र क्रमस्तु वृहज्जातके "शरुवुगुशुचराद्या वृद्धितो वीर्यवन्तः" । अस्यार्थः । सर्वग्रहेभ्यः शनिर्दुर्वलः । तस्माद्वली भौमः । ततो वुधः । ततो गुरुः । ततः शुक्रः । ततश्चन्द्रः । ततो रविः । अर्थात् सर्वेभ्यो वली रविरित्यर्थः । अस्य प्रयोजनं तु लघुजातके "वलसाम्येऽस्मादधिकचिन्ता"-इति ॥ २३ ॥

अथ वक्ष्यमाणायां 'चरदशायां नाथान्ताः समाः प्रायेण'-इति । सूत्रोपदिष्टायां गणनाक्रमं सूत्राभ्यां दर्शयति ।

## प्राचीवृत्तिर्विषमभेषु ॥ २४ ॥ परावृत्योत्तरेषु ॥ २५ ॥

विषमभेषु मेषमिथुनसिंहतुलाधनुःकुम्भेषु प्राचीवृत्तिर्मेषवृषादिरीत्या क्रमगणना स्यात् । उत्तरेषु विषमादुत्तरेषु समराशिषु वृषकर्कटकन्या-

वृश्चिकमकरमीनेषु परावृत्त्या व्युत्क्रमेण वृषमेषादिरीत्या गणना स्यात् इत्यर्थः ॥२४-२५ ॥

अत्रापवादमाह ।

## न क चित् ॥ २६ ॥

क चित् विषमराशौ क्रमगणना न स्यात् । समराशौ व्युत्क्रमगणना न स्यात् । कुत्रेत्याकाङ्क्षायामृषिणा स्वयमेवोक्तम् । "मातृधर्मयोः सामान्यं विपरीतमोजकूटयोः"-इति। अस्यार्थः । मातृधर्मयोः पञ्चमैकादशयोः सिंहकुम्भयोः सामान्यम् । अर्थाद्यथा लग्नकुण्डल्यां राशिनिवेशः क्रियते तथैव लग्नकुण्डल्याम् । राशिनिवेशस्तु विपरीतम् । तेन कुम्भसिंहयोर्विपरीतगणना स्यात् । ओजकूटयोः । ओजे विषमपदे । वृषवृश्चिकयोः कूटौ मध्यस्थराशी तौ ओजकूटौ तयोरोजकूटयोर्विपरीतम् । सामान्याद्विपरीतम् । अर्थाद्विपरीताद्विपरीतं क्रमगणना इति यावत् । एतदुक्तं भवति वृषवृश्चिकयोः समत्वेऽपि क्रमगणना सिंहकुम्भयोर्विषमत्वे व्युत्क्रमगणना भवति ।

अत्र प्राचीनकारिका च ।

"क्रमाद्वृषे वृश्चिके च व्युत्क्रमात् कुम्भसिंहयोः" ।
तेन विषमपदे क्रमगणना समपदे व्युत्क्रमगणना ।

अत एव सूत्रत्रयफलितार्थः श्रीमता नीलकण्ठेनोक्तः ।

"मेषादिभिस्त्रिभैर्ज्ञेयं पदमोजपदे क्रमात् ।
दशाब्दानयने कार्या गणना व्युत्क्रमात् समे" ॥

तत्र प्राचीवृत्तिर्विषमपदे परावृत्त्योत्तरे इति कथं नोक्तम् । तत्रोच्यते । अस्मिन् ग्रन्थे विषमसमराशौ क्रमव्युत्क्रगणना प्रसिद्धा परन्तु केवलचरदशायामेव विषमसमपदभेदेन क्रमव्युत्क्रमगणनया व्यवहार इति सूचनार्थं सूत्रत्रयम् । अन्यथा तु । सर्वत्रैव पदभेदेन गणना स्यात् । तथा "यावदीशाश्रयं पदम्"-इति वक्ष्यमाणत्वाच्च संदेहभयान्नोक्तमिति ॥ २६ ॥

अथ राशीनां दशाब्दानयनविधिं दर्शयति ।

**नाथान्ताः समाः प्रायेण ॥ २७ ॥**

अत्र राशीनां स्वामिनो ग्रन्थान्तरोक्ता ग्राह्याः ।

तथा च बृहज्जातके ।

"क्षितिजसितज्ञचन्द्ररविसौम्यसितावनिजाः ।

सुरगुरुमन्दसौरिगुरवश्च गृहांशकपाः"-इति ॥

ग्रहाणां स्थानस्यानियतत्वात् तथा चरदशायां च 'शुभः केतुः'-इति-सूत्राच्चास्या दशायाश्चरदशा इति नाम बोध्यम् । अत्र समा अब्दा नाथान्ता राशीनां स्वामिपर्यन्ता ग्राह्या अर्थात् पूर्वोक्तक्रमव्युत्क्रमगणनानुसारेण । यत्र क्रमगणना चेत् तत्र ग्रहमध्ये भावा विशोध्याः । उत्क्रमगणना चेत् तत्र भावमध्ये ग्रहः शोध्यो यदवशिष्टं तत्र राशितुल्यानि वर्षाणि अंशादिभिरनुपातात् मासादयश्चानेयाः। अत्र सामान्यतो वर्षानयनप्रकारो वृद्धैरुक्तः ।

तस्मात् तदीशपर्यन्तं संख्यामत्र दशां विदुः ।

वर्षद्वादशकं तत्र न चेदेकं विनिर्दिशेत् ॥

अस्यार्थः । तस्माद्भावात् तदीशपर्यन्तं या संख्या तामत्र दशां विदुः। क्रमोत्क्रमगणनया इति शेषः । तत्र नाथे भावतुल्ये नाथे वर्षद्वादशकं तत्र न चेत् तदा एकं एकादिक्रमेण विनिर्दिशेत् । प्रायेणेति पदेन प्रथमस्तु क्रमोत्क्रमगणना सूचिता ततः स्वामिन उच्चत्वनीचत्वाभ्यामेकैकवर्षवृद्धिह्रासौ सूचितौ । ततो वृश्चिककुम्भयोर्द्विनाथत्वं सूचितम् । ततः क्रमोत्क्रमाद्दशालेखनप्रकारश्चापि सूचितः ।

अत्र वृद्धवाक्यानि ।

"उच्चखेटस्य सद्भावे वर्षमेकं विनिर्दिशेत् ।

तथैव नीचखेटस्य वर्षमेकं विशोधयेत्" ॥

वृश्चिककुम्भयोर्विशेषः ।

"कुजसौरी केतुराहू राजानावलिकुम्भयोः ।

कुजसौरी केतुराहू युक्तौ तत्र स्थितौ यदि ॥
वर्षद्वादशकं तत्र न चेदेकं विनिर्दिशेत्" ।

अस्यार्थः । कुजसौरी केतूराहू वृश्चिककुम्भयोः स्वामिनौ अर्थात् वृश्चिकस्य कुजकेतु स्वामिनौ कुम्भस्य शनिराहू स्वामिनौ । यदि द्वौ युक्तौ स्वराशौ स्थितौ तत्र वर्षद्वादशकं वृद्धवाक्यप्रमाणाज्ज्ञेयम् । न चेत् स्तः तदा स्वाम्यभाव इत्रोक्तरीत्या दशानयनं कार्यम् । तत्र तयोर्भिन्नभिन्नराशौ गतत्वे तत्र यो बलवाँस्तत्संख्या ग्राह्या ।

उक्तं च वृद्धैः ।

"द्विनाथक्षेत्रयोरत्र निर्णयः कथ्यतेऽधुना ।
एकः स्वक्षेत्रगोऽन्यस्तु परत्र यदि संस्थितः ॥
तदाऽन्यत्र स्थितं नाथं परिगृह्य दशां नयेत् ।
स्वक्षेत्रे मिलितावेव स्वामिनौ द्वादशाब्दकम् ॥
एकस्य स्वादृगृहस्थत्वं न हि कार्योपयोगिकम् ।
द्वावप्यन्यक्षंगौ तौ चेत् स ग्रहो बलवान् भवेत् ॥
ग्रहयोगसमानत्वे चिन्त्यं राशिबलाद्बलम् ।
चरस्थिरद्विस्वभावाः क्रमात् स्युर्बलशालिनः ॥
राशिसत्त्वसमानत्वे बहुवर्षो बली भवेत् ।
एकः स्वोच्चगतस्त्वन्यः परत्र यदि संस्थितः ॥
ग्राहयेदुच्चखेटस्थं राशिमन्यं विहाय वै ।
नाथान्ता इति रीत्या यो बहुवर्षवतीं दशाम् ॥
करोति बहुवर्षोऽसौ स्वराशेर्दूरगः खगः ।
एवं सर्वं समालोच्य जातस्य निधनं वदेत् ॥

ग्रहयोर्वा भावयोर्बलविचारे यदि कश्चिद्ग्रह उच्चस्थः परन्तु न्यायेन निर्बलोऽन्यो ग्रह उच्चाद्यधिकारहीनः स ग्रहादिरीत्या न्यायेन बलयुतस्तदा राश्योर्बलविचारे उच्चग्रहसंयुक्तराशिर्बलवान् ग्रहयोर्मध्ये उच्चं गतो ग्रहो बलवान् नापरः ।

अन्यच्च विशेषो वृद्धैरुक्तः ।

"न्यासयोर्ग्रहहीनत्वे चैकस्यान्येन संयुतौ ।
ग्राह्यो राशिर्ग्रहाभावस्तत्स्वाम्युच्चं गतो यदि ॥
एकत्र स्वर्क्षगः खेटश्चान्यत्र द्वौ ग्रहौ यदि ।
ग्रहद्वययुतिं हित्वा ग्राहयेदुच्चभं सुधीः" ॥

अत्रापि पूर्ववदेवार्थः । न्यासयोरित्युपलक्षणम् । न्यासयोर्लग्नसप्तमयो राश्योर्बलविचारे एकत्र ग्रहाभावे अन्यत्र यदि स्वेशातिरिक्तान्यो ग्रहः । तत्र यो राशिर्न्यायेन निर्बलः स एव बलवान् यदा तत्स्वामी स्वर्क्षं गतः ।

उच्चराशयस्तु ।

"अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः ।
दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः" ॥

अत्रास्मद्गुरुवरप्रणीताः श्लोकाः ।

चरदशानयनं नयनन्दनं न हि कृतं मुनिसूत्रमतेन यत् ।
मुनिपुरातनवाङ्नियमानहं समवलोक्य धिया वितनोम्यदः ॥
असमभे गणना क्रमशो मता समगृहे विपरीतविधिर्बुधैः ।
क्रमविधिर्वृषवृश्चिकयोः परं कलशसिंहभयोर्विपरीतता ॥
भवनशोधितभावपतेर्भवेद्यदिह शेषभमब्दमितिक्रमे ।
पतिविशोधितभावविशिष्टभं भवति चाब्दमितिर्विपरीतके ॥
यमहतान्तरभागमितिस्ततो भवति मासविधिः शरभाजिता ।
इह तदोर्वरितेऽक्षविभाजिते दिनघटीपलमानमुदाहृतम् ॥
ध्वजकुजावलिराशिपतीरितावगुशनीकलशाधिपती बुधैः ।
अथ तयोश्चरसंज्ञदशाविधाविह वदामि शरन्मुखसाधनम् ॥
अधिपयोर्ग्रहयोगबलेन योऽधिकबलः खगवीर्यसमे ततः ।
चरमुखर्क्षबलेऽपि समे ततोऽधिकशरत्प्रदतो हि जगद्दशा ॥
अभिगृहं क्रमतः शिखिभौमयोरधिकवीर्ययुतः कथितोक्तिभिः ।
तमवलम्ब्य घटे विपरीतया गणनयाऽसुरसौरिजगद्दशा" ॥

अथ दशालेखनक्रमस्तु लग्नान्नवमराशिवशात् । यदि लग्नान्नवमराशिर्विषमे पदे भवेत् तदा लग्नद्वितीयादिरीत्या दशा लेख्या । लग्नान्नवमराशिः समपदे भवेत् तदा लग्नद्वादशैकादशरीत्या दशा लेख्या । परन्तु आरम्भावधिः स्वस्वलग्नमेव । उक्तं च "पञ्चमे पदक्रमात् प्राक्प्रत्यक्त्वम्" । अस्यार्थः । पञ्चमे लग्नान्नवमे पदक्रमाद्विषमसमपदक्रमात् प्राक्त्वं क्रमत्वं प्रत्यक्त्वं व्युत्क्रमत्वं च स्यात् ।

अत्र गुरवः ।

"तनुभान्नवमे समे पदे विपरीतक्रमशो दशालिपिः ।
विषमेऽथ पदे क्रमाद्भवेच्चरसंज्ञस्य दशाविधौ लिपिः" ॥

इत्यलमतिविस्तरेण ॥ २७ ॥

अथ पदमित्यादिसूत्रेणाग्रे विशेषफलं विवक्षुरादौ पदमारूढापरपर्यायमुपदिशति ।

## यावदीशाश्रयं पदमृक्षाणाम् ॥ २८ ॥

ऋक्षाणां राशीनां यावदीशाश्रयं पदम् । अर्थात् विचाराश्रयीभूतराशेस्तदीशपर्यन्तं या संख्या तामीशादग्रे संगण्य सा यत्र राशौ समाप्ता स राशिर्विचाराश्रयीभूतराशेः पदम् । ईशादग्रे संगण्य इत्यर्थः कथम् । यावाँश्चासावीशश्च यावदीशः । यावदीश आश्रयो यस्य तद्यावदीशाश्रयं पदमिति समासाल्लब्ध इति ।

एतदेव वृद्धेनाप्युक्तम् ।

"लग्नाद्यावतिथेस्तिष्ठेद्राशौ लग्नेश्वरः क्रमात् ।
ततस्तावतिथं राशिं लग्नारूढं प्रचक्षते" ॥

श्रीमता नीलकण्ठेन स्वकृतटीकायामग्रिमसूत्रद्वयस्योपरिस्वार्थदृढकरणार्थम् ।

"लग्नाल्लग्नपतिर्यावद्राशिसंस्थस्ततः पुनः ।
तावान्मुनिभिरारूढः कथितः सर्वशास्त्रतः ॥

यदा लग्नाधिपो लग्ने सप्तमे वा स्थितो यदि ।
आरूढलग्नभे चात्र निर्दिशेत् कालवित्तमः" ॥

इति श्लोकद्वयं स्वकीयं विन्यस्तमिति तत्सूत्रद्वयपरामर्शात् प्रत्यक्षम् ॥२८॥

अथात्रापि वादरूपं सूत्रद्वयमाह ।

## स्वस्थे दाराः ॥ २९ ॥ सुतस्थे जन्म ॥ ३० ॥

स्वस्थे लग्नाच्चतुर्थस्थे लग्नस्वामिनि दाराः । चतुर्थस्थो राशिर्लग्नस्य पदम् । तथा सुतस्थे लग्नात् सप्तमस्थे लग्नस्वामिनि लग्नात् जन्मेति शब्देन दशमो राशिर्लग्नस्य पदम् । यत् तु श्रीमता सुबोधिनीकारेण स्वकृतटीकायामुदाहरणरूपं सूत्रद्वयमङ्गीकृत्य पूर्वपरिभाषया स्वस्थे ग्रहे दाराः सप्तमो राशिः पदम् । सप्तमस्थे ग्रहे जन्मराशिः पदमिति यल्लिखितं तदसङ्गतम् । यत एकस्मिन्नेव सूत्रे प्रथमपदमङ्कक्रमेण भावबोधकं द्वितीयपदं संज्ञा क्रमेण भावबोधकमिति महद्वैषम्यम् । अत्र ऋषेर्मनसि इत्थं शङ्का जाता यत् पूर्वसूत्रानुसारेण दारा इति पदस्य सप्तमरूपं जन्म इति पदस्य जन्मराशिरूपमर्थं जनाः करिष्यन्ति अत एवास्यैवाग्रे "सर्वत्र सवर्णभावराशयश्च"-इति सूत्रं स्वप्रतिज्ञानुरूपं निबद्धम् । श्रीमता सुबोधिनीकारेणापि "दारभाग्यशूलस्थार्गलाः"-इति सूत्रटीकायामत्राक्षरैरेव राशिभावबोधनं मुनेरभिप्रेतमित्यनुपदमेव स्फुटीभविष्यति" तथा "ऽस्मिन् ग्रन्थे कटपयादिक्रमेणाङ्का प्राह्या"-इति स्वीकृतम् । तथाऽग्रिमसूत्रस्यापि पूर्वटीकायामुल्लिखितम् । "अथास्मिन् शास्त्रे भावराशिबोधकपदानामन्यशास्त्रतो वैलक्षण्यमाशंङ्क्याह"-इति तेन सर्वथा तदर्थं विपरीमेवेति विभावनीयम् ।

तथाऽस्मद्गुरुचरणाः ।

"ग्रहे भावशुद्धेऽवशिष्टं तु योज्यं ग्रहे स्पष्टमारूढसंज्ञं भवेत् तत् ।
सुखस्थे सुखं द्यूनभे कर्मभं च सुसूक्ष्मं पदं जैमिनीये निरुक्तम्" ॥

तस्माद्यस्माद्भावात् ततः स्वामी चतुर्थगस्तदा तत्स्वामिनस्तुल्यमेव

पदम् । यदा तत्स्वामी सप्तमगस्तदा तस्मिन् स्वामिनि राशित्रयं युक्तं कर्त्तव्यं तदा पदं भवति । एवमत्र यथा "नाथान्ताः समाः"-इति रीत्या चरदशानयनं क्रियते "वर्णादान्ताः समाः"-इत्यनेन यथा वर्णददशानयनं क्रियते तथैव यदि "पदान्ताः समाः"-इति रीत्या पददशानयनं भवेत् तदा न काऽपि हानिरिति । तथा चेदं व्यवहारेऽपि दृश्यते इति । अथ "यत् तु आद्यैः स्वस्थे दारा विचारणीयाः । सुतस्थे भ्रातृजन्म विचार्यमित्युक्तं तदसङ्गतमेव प्रतिभाति"-इति सुबोधिन्यां यल्लिखितं तन्न समीचीनम् । पूर्वेषामयं तात्पर्यः । स्वस्थे दाराः स्वादात्मकारकात् स्थे सप्तमे इति स्वस्थे अर्थादात्मकारकात् सप्तमे स्त्रीविचारः कर्त्तव्यः अथ वा स्वस्थे द्वितीये स्त्रीविचारः कर्त्तव्यः । सुतस्थे जन्म इत्यत्र सुते तिष्ठतीति सुतस्थ इति विग्रहो न कार्यः । सुतस्थ-इत्याकारकं शब्दस्वरूपं भाववाचकं स्वीकरणीयम् । तेन स्वपदानुवृत्तेः स्वादात्मकारकात् सुतस्थे एकादशे भ्रातृजन्मविचारोऽर्थाज्ज्येष्ठभ्रातृजन्मविचारः कर्त्तव्यः ।

उक्तं च ।

"एकादशादग्रजं तु तृतीयात् तु यवीयसम्"-इति ॥ २९-३० ॥

अथात्र स्वस्थे दाराः सुतस्थे जन्म क्रिये पितरि विशेषणेत्यादि सूत्रेषु संदेहस्थाने केन प्रकारेण भावसंख्या ग्राह्या इति संशयं परिहरन्नाह ।

## सर्वत्र सवर्णा भावा राशयश्च ॥ ३१ ॥

अस्मिन् ग्रन्थे सर्वत्र भावा राशयश्च सवर्णा एकादिसंख्याबोधकाक्षरगम्याः । चकारात् भावा राशयश्च सवर्णा वर्णदेन सहिता वर्णदराशिना सहिता वर्णददशासहिताश्च भवन्तीत्यर्थः ।

वर्णदानयनप्रकारस्तु वृद्धैरुक्तः

"ओजलग्नप्रसूतानां मेषादेर्गणयेत् क्रमात् ।
युग्मलग्नप्रसूतानां मीनादेरपसव्यतः ॥
मेषमीनादितो जन्मलग्नान्तं गणयेत् सुधीः ।

तथैव होरालग्नान्तं गणयित्वा ततः परम् ॥
पुंस्त्वेन स्त्रीतया वै ते सजातीये उभे यदि ।
तर्हि संख्ये योजयीत वैजात्ये तु विशोधयेत् ॥
मेषमीनादितः पश्चाद्यो राशिः स तु वर्णदः" ।

अस्यार्थः । विषमलग्नं चेत् तदा तथैव स्थाप्यः । समलग्नं चेत् तदा मीनादिरीत्या गणनीयोऽर्थात् स्पष्टलग्नराश्यादिकं द्वादशमध्ये शोध्यम् । एवं जन्मलग्नान्तं तथा होरालग्नपर्यन्तं च गणयित्वा ते यदि विषमत्वेन समत्वेन वा सजातीये तदा ते योजनीये । यदा च विजातीये स्तस्तदाऽधिकमध्ये न्यूनः शोध्यः । एवं कृते यदि विषमराशिश्चेत् तदा स एव वर्णदराशिर्भवति यदि समराशिर्भवेत् तदा द्वादशमध्ये शोध्यस्तदा वर्णदराशिः स्यात् परन्तु आचार्येण कथमेवं कृतमिति न विद्मः । यतो जन्मलग्नं होरालग्नं चेति द्वे सजातीये वा विजातीये स्यातां तयोर्योगो यदि विषमस्तदा स एव वर्णदराशिः। यदा समस्तदा द्वादशमध्ये शोध्यस्तदा वर्णदराशिर्भवतीति ।

अत्रोदाहरणं यथा। लग्नम्५।३।८।२। होरालग्नम्३।४।८।२। अत्र द्वौ द्वादशमध्ये शोधितौ जातौ। लग्नम् ६।२६।५१।५८। होरालग्नम् ८।२५।५१।५८। द्वयोर्योगः३।२२।४३।५६ । समत्वाद्द्वादशमध्ये संशोध्य वर्णदः८।७।१६।४ । अथ वा यथा स्थितयोस्तयोर्योगः ८।७।१६।४ । अयमेव वर्णदः । जन्मलग्नम्२।८।७।६ । होरालग्नम्८।७।६।५ । वर्णदराशिः१०।१५।१२।११। जन्मलग्नम्२।८।७।६होरालग्नम्७।२५।६।९अत्रौजलग्नानुसारेण होरालग्नं चक्राच्छोधितम् ४।४।५३।५१। अत्र विजातीयत्वाद्द्वयोरन्तरम्१।२६।४६।४५। इदं समतश्चक्राच्छुद्धम् । ततो वर्णदराशिः १०।३ १३।१५। अथ वा द्वयोर्लग्नहोरालग्नयोर्योगः १०।३।१३।१५अयमेव वर्णदराशिः । परन्तु आचार्येण कथमोजलग्नेत्यादिकृतं तन्न विद्मः । अथ होरालग्नजन्मलग्नयोर्मध्ये यद्बली तस्माद्यथा "नाथान्ताः समाः"-इति रीत्या चरदशाऽऽनीता तथैव "वर्णदान्ताः समाः"-इति रीत्या वर्णददशा आनेयाः । चरदशा पददशा वर्णददशा

इत्यादिपदार्थानामुदाहरणमग्रे वक्ष्यामः। अत्र दशानयने पदक्रमेण क्रमव्युत्क्रमौ न ग्राह्यौ। समविषमराशिवशात् क्रमव्युत्क्रमगणना कार्या। "ओजलग्नप्रसूतानाम्"-इत्युक्तत्वात्। वर्णददशानयनं सूत्राक्षरार्थान्नायातीति न च वाच्यम्। "सिद्धमन्यत्"-इति वक्ष्यमाणत्वादत्र नोक्तं प्राचीनैः संगृहीतम्। अत्र धनभावादीनामपि अनयैव रीत्या वर्णदराशयो भवन्ति। तत्र धनभावादीनां होरालग्नस्यायं क्रमः। लग्नस्य होरालग्नमध्ये एकैकराशिवृद्ध्या धनभावादीनां होरालग्नानि भवन्ति एवमेव भावलग्नानयनेऽपि। लग्नस्य भावलग्नमध्ये एकैकराशियोगेन धनभावादीनां भावलग्नानि भवन्ति। गुलिकलग्नस्य द्वादशभावास्तु प्रसिद्धा एव इति ज्ञेयम्। श्रीमता नीलकण्ठेनाप्ययमेवार्थोऽङ्गीकृतः। यथा "पूर्वोक्तरीत्या धनभावादि तत्तद्भावान्तं गणनां विधाय पूर्ववत्करणेन तत्तद्भाववर्णदराशयो भवन्तीति सर्वत्रेति पदेन सूचितम्-"इति। अथ भाववर्णदानयनम्। यथा वर्णदराशिर्लग्नौजत्वयुग्मत्वभेदेन जन्मलग्नहोरालग्नसंख्यावशतः समानीतस्तथैव भावलग्नं जन्मलग्नं विभाव्य गुलिकलग्नं होरालग्नसमं च मत्वा पूर्ववत्करणेन यो लभ्यते स भाववर्णदराशिरिति बोध्यम्। ततो भावलग्नगुलिकलग्नयोर्मध्ये यो राशिर्बली तस्मात् स्वस्वभाववर्णदसंख्यावशतो भाववर्णददशा समानेया। तत्र दशालेखनक्रमस्तु जन्मलग्ने विषमे लग्नात् जन्मलग्ने समे तत्सप्तमात् विषमे क्रमतः समे व्युत्क्रमतो दशा लेख्या।

"जन्मलग्नं समं तर्हि सम्मुखं तस्य चादिमम्"-इतित्युक्तत्वात्।

भावलग्नहोरालग्नानयनम्।

"सूर्योदयं समारभ्य घटिकानां तु पञ्चकम्।
प्रयाति जन्मपर्यन्तं भावलग्नं तथैव च॥
तथा सार्धद्विघटिकामितात् कालाद्विलग्नभात्।
प्रयाति लग्नं तन्नाम होरालग्नं प्रचक्षते"॥

भावलग्नानयनेऽनुपातः। यदि पञ्चघटीभिस्त्रिंशदंशा लभ्यन्ते तदेष्ट-

घटीभिः किमिरति रीत्या फलमानीय यदागतं तल्लग्ने योज्यं भावलग्नं भवति । एवमेव होरालग्नानयने सार्धद्विघटीभ्यां चेत् त्रिंशदंशा लभ्यन्ते तदीष्टघटीभिः किमिति त्रैराशिकेन यल्लभ्यन्ते तल्लग्नमध्ये योजनीयं तदा होरालग्नं भवतीति श्रीनीलकण्ठमतम् । यत उक्तम् "भावलग्नं होरालग्नं च जन्मलग्नाद्गणनीयम्"-इति । जन्मलग्ने विषमे सूर्यराशितः समे जन्मलग्नाद्धोरालग्नं भावलग्नं च गणनीयमिति प्राचीनाः । अयमेवाभिप्रायो वृद्धेनापि प्रतिपादितः परन्तु नीलकण्ठेनोक्तम् "कारिकातोऽयमर्थो नायाति"-इति सम्यग्विरुद्धम् । यतो या पूर्वकारिका सा तु श्रीमता निलकण्ठेन त्यक्ता ।

तथा च वृद्धवाक्यम् ।

"सूर्योदयात् समारभ्य कलापञ्चप्रमाणतः ।
जन्मेष्टकालपर्यन्तं गणनीयं प्रयत्नतः ॥
ओजराशौ यदा लग्नं सूर्यराश्यनुसारतः ।
समलग्ने जन्मलग्नाद्यत्संख्या प्राप्यते द्विज ॥
भावलग्नं विजानीयाद्धोरालग्नं तदुच्यते ।
तथा सार्धद्विघटिकामितात् कालाद्विलग्नभात् ॥
प्रयाति लग्नं तन्नाम होरालग्नं द्विजोत्तम ।
यज्जन्म विषमर्क्षेषु सूर्यादि गणयेत् क्रमात् ॥
समलग्ने यदा जन्म गणयेज्जन्मभाद्द्विज ।

अस्माकमेवं मतम् । भावलग्नं होरालग्नं घटिकालग्नं च सूर्यादेव गणनीयम् । यतः सर्वेषामेव लग्नानां सूर्यादेव प्रवृत्तिः । सूर्योदये सर्वाण्येव जन्मलग्नभावलग्नहोरालग्नघटिकालग्नानि समानि । तदग्रे स्वस्वोदयमानानुसारेण सर्वाणि पृथग्रूपाणि भवन्ति । जन्मलग्नं स्वदेशोदयानुसारेण भावलग्नं पञ्चघटीमितोदयमानानुसारेण होरालग्नं सार्धद्विघटीमितमानानुसारेण घटिकालग्नं घटिकामितोदयप्रमाणानुसारेणेति ।

"होरालग्नादिमांशे तु पूर्णमन्ते न किञ्चन"इति ।

वृद्धवाक्याद्धोरालग्नादिकं चापि सावयवमानेयमिति । अत्र मन्मतमेव मुख्यमिति नास्माकमाग्रहः । केवला सद्युक्तिरेव मया प्रदर्शिता ।

अथ वर्णदराशितः फलम् ।

"पापदृष्टिः पापयोगो वर्णदस्य त्रिकोणके ।
यदि स्यात् तर्हि तद्राशिपर्यन्तं तस्य जीवनम् ॥
रुद्रशूले यथैवायुर्मरणादि निरूप्यते ।
तथैव वर्णदस्यापि त्रिकोणे पापसङ्गमे ॥
वर्णदात् सप्तमाद्राशेः कलत्रादि विचिन्तयेत् ।
एकादशादग्रजं तु तृतीयात् तु यवीयसम् ॥
पञ्चमे तनुजं विन्द्यान्मातरं तुर्यपञ्चमे ।
पितुस्तु नवमान्मातुः वर्णदात् पञ्चमस्य तु ॥
शूलराशिदशायां वै प्रबलायामरिष्टकम्" ।

स्वस्ववर्णदराशेः प्रबलायां शूलदशायामरिष्टं जानीयादित्यलमतिविस्तरेण ॥ ३१ ॥

अथात्र विशेषमाह ।

## न ग्रहाः ॥ ३२ ॥

ग्रहाः सवर्णा न भवन्ति अर्थादेकादिसंख्याबोधकाक्षरगम्या न भवन्ति प्रथमपक्षे द्वितीयपक्षे । ग्रहाणां वर्णदराशयो न भवन्ति इति ॥ ३२ ॥

अथान्तर्दशाप्रकारं दर्शयति ।

## यावद्विवेकमावृत्तिर्भानाम् ॥ ३३ ॥

भानां राशीनां विवेकं यावदावृत्तिर्भवति । विवेकपदबोध्या चतुश्चत्वारिंशदधिकशतसंख्या भवति । अर्थात् प्रतिराशिषु ये दशाब्दाश्चरस्थिरनवांशदशादिषु सिद्धास्तेषां द्वादशभागेन द्वादशराशीनामावृत्तिरर्थादन्तर्दशा भवतीति एवमेव वृद्धैरुक्तम् ।

"कृत्वाऽर्कधा राशिदशां राशेर्भुक्तिं क्रमाद्भवेत्" इति ।

यत् तु श्रीमता नीलकण्ठेन स्वकृतटीकायां "यत् तु उपस्थिततया दशाक्रमावधिः स्वस्वलग्नमेवेति पन्थेरुक्तं तन्न" ।

"होरालग्नमयोर्नेयाऽतुर्यलाद्वर्णदा दशा"-इतिकारिकोक्तत्वात् ।

इति तन्न समीचीनम् । यतः केवलं वर्णानयन एव सा रीतिः । तया रीत्या यद्वर्णादि आयाति सा लग्नस्य दशा द्वितीयभावस्य दशा न तु होरालग्नादीनाम् । तथा कल्पने द्वित्रिवारमेकराशेर्दशा भवितुमर्हति तेन पन्थोक्तमेव समीचीनं न नीलकण्ठोक्तम् । अन्तर्दशानयनेऽपि लग्ने विषमे क्रमात् समे व्युत्क्रमादन्तर्दशा लेख्या ।

तथा स्थूलान्तर्दशाविभागो वृद्धैरप्युक्तः ।

"कृत्वाऽर्कधा राशिदशां राशेर्भुक्तिं क्रमाद्वदेत् ॥
सा पर्यायदशा लग्ने युग्मे तु व्युत्क्रमाद्वदेत् ।
लग्नं युग्मं यदा तर्हि सम्मुखं तस्य चादिमम्"-इति ॥

पर्यायदशाऽर्थादन्तर्दशा । यदि लग्नं समराशिस्तदा तस्य सम्मुखं तदादिराशिः । यथा वृषस्य मेषो मीनस्य कुम्भ इति ॥ ३३ ॥

अथ होराद्यपेक्षां निवर्त्तयन्नाह ।

## होरादयः सिद्धाः ॥ ३४ ॥

## इति जैमिनिसूत्रे प्रथमाध्यायस्य प्रथमपादः ।

होरादयः सिद्धाः शास्त्रान्तरप्रसिद्धा ग्राह्याः ।

तदुक्तं वृद्धैः ।

"राशेरर्धं भवेद्धोरास्ताश्चतुर्विंशतिः स्मृताः ।
मेषादि तासां होराणां परिवृत्तिद्वयं भवेत् ॥
राशेस्त्रिभागा द्रेष्काणास्ते च षट्त्रिंशदीरिताः ।
परिवृत्तित्रयं तेषां मेषादेः क्रमशो भवेत् ॥
सप्तांशपास्त्वोजगृहे गणनीया निजेशतः ।
युग्मराशौ तु विज्ञेया सप्तमर्क्षाधिनायकात् ॥

नवांशेशाश्चरे तस्मात् स्थिरे तन्नवमादितः ।
उभये तत्पञ्चमादेरिति चिन्त्यं विचक्षणैः ॥
द्वादशांशस्य गणना तत्तत्क्षेत्राद्विनिर्दिशेत्"-इति ।

यद्यप्येते पदार्थाः शास्त्रान्तरप्रसिद्धा एव तथाऽपि होराद्रेष्काणकौ विलक्षणौ इति चिन्त्यम् ॥ ३४ ॥

इति सूत्रार्थप्रकाशिकायां प्रथमे प्रथम पादः सम्पूर्णः ।

अथ "आत्माधिकः कलादिभिर्नभोगः सप्तानामष्टानां वा" इति सूत्रोपदिष्टात्मकारकमधिकरोति ।

## अथ स्वांशो ग्रहाणाम् ॥ १ ॥

अथेत्यनन्तरं गृहाणां मध्ये यः स्वांश आत्मकारकांशस्तमवलम्ब्य फलं वाच्यमिति । अत्र सर्वत्र स्वपदेनात्मकारकस्य ग्रहणं कर्त्तव्यम् ॥ १ ॥

## पञ्च मूषिकमार्जाराः ॥ २ ॥

पञ्चशब्दान्मेषे कारकांशे मूषिकमार्जारादयो दुःखदा भवन्ति ॥ २ ॥

## तत्र चतुष्पादः ॥ ३ ॥

तत्र वृषे कारकांशे चतुष्पादः सुखदा भवन्ति ॥ ३ ॥

## मृत्यौ कण्डूः स्थौल्यं च ॥ ४ ॥

मिथुनांशस्थे कारके कण्डूरोगः स्थौल्यं च भवतीत्यर्थः ॥ ४ ॥

## दूरे जलकुष्ठादिः ॥ ५ ॥

कर्कटे कारकांशे जलभयं कुष्ठरोगश्च भवति ॥ ५ ॥

## शेषाः श्वापदानि ॥ ६ ॥

सिंहांशे कारके श्वापदानि शुनकादयो दुःखदा भवन्ति ॥ ६ ॥

## मृत्युवज्जायाऽग्निकणश्च ॥ ७ ॥

जाया कन्या । सा कारकांशश्चेत् तदा मृत्युवन्मिथुनवत् फलं कण्डूः स्थौल्यं तथाऽग्निकणश्चाग्निकणेन दुःखं भवतीत्यर्थः ॥ ७ ॥

लाभे वाणिज्यम् ॥ ८ ॥

तुलायां कारकांशे वाणिज्यकर्मकर्त्ता ॥ ८ ॥

अत्र जलसरीसृपाः स्तन्यहानिश्च ॥ ९ ॥

अत्र वृश्चिकांशस्थे कारके जलसरीसृपाः जलसर्पादयो दुःखदा भवन्ति । तथा स्तन्यहानिर्मातृदुग्धहानिश्च भवतीत्यर्थः ॥ ९ ॥

समे वाहनादुच्चाच्च क्रमात् पतनम् ॥ १० ॥

धनुषि कारकांशे वाहनादूर्ध्वप्रदेशाच्च क्रमात् पतनं भवति ॥ १० ॥

जलचरखेचरखेटकण्डूदुष्टग्रन्थयश्च रिष्फे ॥ ११ ॥

रिष्फे मकरांशे कारके जलचराः खेचराः खेटा ग्रहाश्च दुःखदा भवन्ति । दुष्टग्रन्थिर्वातव्याधिश्च गण्डादिकमित्यर्थः ॥ ११ ॥

तडागादयो धर्मे ॥ १२ ॥

धर्मे कुम्भे कारकांशे तडागादिनिर्माणकर्त्ता ॥ १२ ॥

उच्चे धर्मनित्यता कैवल्यं च ॥ १३ ॥

उच्चे मीने कारकांशे नित्यं धर्मकर्त्ता मोक्षभाक् च ।

कारकांशफलमुक्तं वृद्धैः ।

"शुभराशौ शुभांशे वा कारकांशे धर्मी भवेत् ।
तदंशकेन्द्रेषु शुभे राजा नूनं प्रजायते ॥
कारके शुभराश्यंशे लग्नांशस्थे शुभग्रहे ।
उपग्रहस्य पाश्चात्ये स्वोच्चस्वर्क्षशुभर्क्षगे ॥
पापदृग्योगरहिते कैवल्यं तस्य निर्दिशेत् ।
मिश्रे मिश्रं विजानीयाद्विपरीते विपर्ययम् ॥
चन्द्रभृग्वारवर्गस्थे कारके पारदारिकः ।
बुधतील्यंशकगते तस्मिन् वाणिज्यवान् भवेत् ॥

मेषसिंहांशके तस्मिन् ब्रूयान्मूषिकदंशनम् ।
कारके कार्मुकांशस्थे वाहनात् पतनं भवेत्" ॥

उपग्रहस्यपाश्चात्त्येऽन्त्ये द्वादशे इत्यर्थः । उपग्रह उपखेट इति ॥ १३ ॥

कारकांशे ग्रहस्थितिवशेन फलान्याह ।

## तत्र रवौ राजकार्यपरः ॥ १४ ॥

तत्र कारकांशे रवौ सूर्ये सति राजकार्यपरो राजकार्यकर्त्ता भवतीति ॥ १४ ॥

## पूर्णेन्दुशुक्रयोर्भोगी विद्याजीवी च ॥ १५ ॥

पूर्णेन्दुशुक्रयोः सतोर्भोगी विद्याजीवी च भवति ॥ १५ ॥

## धातुवादी कौन्तायुधो वह्निजीवी च भौमे ॥ १६ ॥

भौमे कारकांशे धातुवादी रसायनविद्यावान् कौन्तनामकशस्त्रधारणकर्त्ता वह्निजीवी अग्निव्यापाराज्जीविकाकर्त्ता ॥ १६ ॥

## वणिजस्तन्तुवायाः शिल्पिनो व्यवहारविदश्च सौम्ये ॥ १७ ॥

सौम्ये बुधे कारकांशे वणिक्कर्मकर्त्ता तन्तुवायः सूत्रनिर्माणकर्त्ता शिल्पी चित्रकर्मकर्त्ता व्यवहारे पटुश्चैवं जनो भवति ॥ १७ ॥

## कर्मज्ञाननिष्ठावेदविदश्च जीवे ॥ १८ ॥

जीवे गुरौ कारकांशे स्थिते कर्मज्ञानादयो भवन्ति ॥ १८ ॥

## राजकीयाः कामिनः शतेन्द्रियाश्च शुक्रे ॥ १९ ॥

शुक्रे कारकांशे राजकीया राजकर्मकर्त्तारः कामिनः कामकलापटवः । शतेन्द्रियाः शतवर्षजीविनश्च भवन्ति ॥ १९ ॥

## प्रसिद्धकर्माजीवः शनौ ॥ २० ॥

शनौ कारकांशे प्रसिद्धकर्मणा जीविकाकर्त्ता ॥ २० ॥

धानुष्काश्चोराश्च जाङ्गलिका लोहयन्त्रिणश्च राहौ ॥ २१ ॥

राहौ कारकांशे । धनुर्विद्यायां पटुश्चोरश्च । अथ वा जाङ्गलिको विषवैद्यो लोहयन्त्रिणश्च । एवं जना भवन्ति । मध्ये चकारोपादानाद्वैकल्पिकमिदं फलम् ॥ २१ ॥

गजव्यवहारिणश्चोराश्च केतौ ॥ २२ ॥

केतौ कारकांशे गजव्यवहारिणो हस्तिव्यवहारकारिणश्चोराश्च जना भवन्ति ॥ २२ ॥

रविराहुभ्यां सर्पनिधनम् ॥ २३ ॥

रविराहुभ्यां मिलिताभ्यां कारकांशे स्थिताभ्यां सर्पान्मरणम् ॥ २३ ॥

शुभदृष्टे तन्निवृत्तिः ॥ २४ ॥

रविराहुभ्यां संयुक्ते कारकांशे शुभग्रहेण दृष्टे तन्निवृत्तिः सर्पान्मृतिर्न स्यात् ॥ २४ ॥

शुभमात्रसम्बन्धाज्जाङ्गलिकः ॥ २५ ॥

कारकांशे केवलशुभसम्बन्धाज्जाङ्गलिको विषवैद्यो भवति । अत्रापि रवियोगे एव एवं फलम् ।

उक्तं च ।

"कारकांशे भानुतमौ शुभषड्वर्गसंयुतौ ।
विषवैद्यो भवेन्नूनं विषहर्त्ता विचक्षणः" ॥ २५ ॥

कुजमात्रदृष्टे गृहदाहकोऽग्निदो वा ॥ २६ ॥

कारकांशे रविराहुभ्यां युक्ते कुजमात्रदृष्टे गृहदाहकोऽग्निदो वा भवति।

यथा ।

"भौमेक्षिते कारकांशे भानुस्वर्भानुसंयुते ।
अन्यग्रहा न पश्यन्ति स्ववेश्मपरदाहकः ॥ २६ ॥

## शुक्रदृष्टेर्न दाहः ॥ २७ ॥

कारकांशे रविराहुयुक्ते शुक्रदृष्टे सति न दाहकः किन्त्वग्निदः स्यात् ॥ २७ ॥

## गुरुदृष्टेस्त्वासमीपगृहात् ॥ २८ ॥

कारकांशे रविराहुभ्यां युक्ते गुरुदृष्टे तदा समीपगृहपर्यन्तं दाहकः स्यान्न स्वगृहमात्रस्य ।

यथोक्तम् ।

"यदि सौम्येक्षिते स्वांशे ह्यग्निदो नैव जायते ।
पापर्क्षे च गुरोर्दृष्टेः समीपगृहदाहकः"-इति ॥ २८ ॥

## सगुलिके विषदो विहतो वा ॥ २९ ॥

गुलिकसहिते कारकांशे परस्मै विषदाता वा स्वयं विषेण हतः स्यात् ।

गुलिकानयनप्रकारस्त्वित्थं वृद्धैरुक्तः ।

"रविवारादि शन्यन्तं गुलिकादि निरूप्यते ।
दिवसानष्टधा भक्त्वा वारेशाद्गणयेत् क्रमात् ॥
अष्टमांशो निरीशः स्याच्छन्यंशो गुलिकः स्मृतः ।
रात्रिमप्यष्टधा भक्त्वा वारेशात् पञ्चमादितः ॥
गणयेदष्टमः खण्डो निष्पतिः परिकीर्त्तितः ।
शन्यंशो गुलिकः प्रोक्तो गुर्वंशो यमघण्टकः ॥
भौमांशो मृत्युरादिष्टो रव्यंशः कालसंज्ञकः ।
सौम्यांशोऽर्धप्रहरकः स्पष्टकर्मप्रदेशकः ॥

इति स्पष्टार्थाः श्लोकाः ।

एवं रव्यादिवारेषु दिवा सप्तमषष्ठपञ्चमचतुर्थतृतीयद्वितीयप्रथमखण्डो गुलिको भवति । रात्रौ तृतीयद्वितीयप्रथमसप्तमषष्ठपञ्चमचतुर्थखण्डो गुलिको भवति । तेन दिनमानं वारक्रमेणैभिः खण्डैः संगुण्य अष्टभिर्भक्तं यल्लभ्यते तद्गुलिकेष्टम् । रात्रौ रात्रिमानं वारक्रमेण स्वखण्डकेन संगुण्य अष्ट-

भिर्भक्तं यल्लभ्यते तद्दिनमानमध्ये योज्यं तदा सूर्योदयाद्गुलिकेष्टकालो भवति। एवमयमेव गुलिकमुहूर्त्तः। दिवा सर्वेषु वारेषु कुलिकः। यमघण्टस्तु यमघण्ट एव। यो भौमांशो मृत्युनामा स तु कण्टक इति नाम्ना प्रसिद्धः।

कालसंज्ञकस्तु ।

"रवौ वर्ज्यं चतुःपञ्च सोमे सप्तद्वयं तथा"।

इत्यादिनाऽर्धयामस्वरुपेणैव त्याज्यः। बुधांशरूपोऽर्धप्रहरस्तु कालवेला इति नाम्ना लोके प्रसिद्धः। परमयं क्रमस्तु दिवा एव प्राप्यते न रात्रौ। स्पष्टकर्मप्रदेशक इति त्रैराशिकेनैतेषां स्पष्टीकरणमिष्टकालवशाद्विधायार्थात् यथा होरालग्नभावलग्नादीनां स्वेष्टवशात् स्पष्टीकरणं प्रोक्तं तथैवैतेषामपि स्पष्टीकरणं कार्यम्। यथा दिनमानमध्ये यदि रात्रिमानमध्ये वा अष्टमांशतुल्यः संपूर्णो विभागो गुलिकसंज्ञस्तदा दिनगतेन रात्रिगतेन वा क इति रीत्या गुलिकेष्टकालं स्पष्टं विधाय ततो निजदेशोदयानुसारेण तत्तदिष्टकालोपरि लग्नं स्पष्टं कार्यम्। तस्मिन्नेव गुलिकराशौ यदि कारकांशश्चेत् तदा सगुलिको जात इति विवेचनीयम्। यत् तु सुबोधिन्यां "गुलिकादिलग्ने कस्यांशोऽस्ति स एव यदि कारकांशश्चेत् तदा स गुलिको जात इति विवेचनीयम्" इति यदुक्तं तदसङ्गतम्। यतः पूर्वं कुत्रापि "तत्र रवौ राजकार्यपरः" इत्यादिसूत्रटीकायामिदं नोक्तम्। रविर्यस्मिन्नंशे व्यवस्थितस्तस्मिन्नेवांशे यदि कारकश्चेत् तदा रविसंयुक्तो जातः। तेनेदं युक्तिविरुद्धं प्रमाणबाह्यं चेति ॥ २९ ॥

## चन्द्रदृष्टौ चोरापहृतधनश्चोरो वा ॥ ३० ॥

सगुलिके कारकांशे चन्द्रदृष्टे चोरापहृतधनो वा स्वयं चोरः स्यात्॥३०॥

## बुधमात्रदृष्टे बृहद्बीजः ॥ ३१ ॥

सगुलिके कारकांशे केवलबुधेनैव दृष्टे बृहद्बीजः बृहन्मुष्कयुक्तः स्यात् ॥ ३१ ॥

## तत्र केतौ पापदृष्टे कर्णच्छेदः कर्णरोगो वा ॥ ३२ ॥

सगुलिकेति पदं निवृत्तम् । तत्र कारकांशे केतौ पापदृष्टे कर्णच्छेदो भवति वा कर्णयो रोगो भवतीति । तत्र द्वितीये कथं नोक्तम् ।

उच्यते ।

"कारकांशे केतुयुक्ते पापग्रहनिरीक्षिते ।
श्रोत्रच्छेदो भवेन्नूनं कर्णरोगोऽथ वा भवेत्" ॥

इति प्रमाणदर्शनात् ॥ ३२ ॥

## शुक्रदृष्टे दीक्षितः ॥ ३३ ॥

कारकांशे केतौ शुक्रदृष्टे दीक्षितो यज्ञकर्मणि दीक्षित इत्यर्थः ॥ ३३ ॥

## बुधशनिदृष्टे निर्वीर्यः ॥ ३४ ॥

कारकांशे केतौ बुधशनिभ्यां दृष्टे निर्वीर्यः स्यात् ॥ ३४ ॥

## बुधशुक्रदृष्टे पौनःपुनिको दासीपुत्रो वा ॥ ३५ ॥

केतुना सहिते कारकांशे बुधशुक्राभ्यां दृष्टे पौनःपुनिकः पुनःपुनरुक्तवक्ता वा दासीपुत्रः स्यात् ॥ ३५ ॥

## शनिदृष्टे तपस्वी प्रेष्यो वा ॥ ३६ ॥

सकेतौ कारकांशे शनिदृष्टे तपस्वी वा प्रेष्यो भृत्यः स्यात् ॥ ३६ ॥

## शनिमात्रदृष्टे सन्यासाभासः ॥ ३७ ॥

सकेतौ कारकांशे शनिमात्रदृष्टे केवलेन शनिना दृष्टे सन्यासाभासः सन्यासमात्रमेव स्यात् न तु सन्यास इति ॥ ३७ ॥

## तत्र रविशुक्रदृष्टे राजप्रेष्यः ॥ ३८ ॥

कारकांशे रविशुक्राभ्यां दृष्टे राजप्रेष्यः सकेताविति पदं निवृत्तम् ।

"कारकांशे यदा विप्र भृगुभास्करवीक्षिते ।
राजप्रेष्यो भवेद्बालः.........."-इति दर्शनात् ॥ ३८ ॥

अथ कारकांशाद्दशमफलमाह ।

रिष्फे बुधे बुधदृष्टे वा मन्दवत् ॥ ३९ ॥

कारकांशाद्रिष्फे दशमे बुधे स्थिते वा बुधेन दृष्टे मन्दवत् "प्रसिद्धकर्मजीवः शनौ"-इति सूत्रोक्तं फलमूह्यम् ॥ ३९ ॥

शुभदृष्टे स्थैर्यः ॥ ४० ॥

कारकांशाद्दशमे शुभदृष्टे स्थैर्यः स्थिरो भवति ॥ ४० ॥

रवौ गुरुमात्रदृष्टे गोपालः ॥ ४१ ॥

कारकांशाद्दशमे रवौ गुरुमात्रदृष्टे केवलेन गुरुणैव दृष्टे गोपालको भवति ॥ ४१ ॥

अथ कारकांशाच्चतुर्थफलमाह ।

दारे चन्द्रशुक्रदृग्योगात् प्रासादः ॥ ४२ ॥

कारकांशाद्दारे चतुर्थे चन्द्रशुक्रदृग्योगात् प्रासादः प्रासादवान् भवति ॥ ४२ ॥

उच्चग्रहेऽपि ॥ ४३ ॥

कारकांशाच्चतुर्थस्थे उच्चगते ग्रहे तदाऽपि प्रासादवान् भवति ॥४३॥

राहुशनिभ्यां शिलागृहम् ॥ ४४ ॥ कुजकेतुभ्यामैष्टिकम्॥ ४५ ॥ गुरुणा दारवम्॥ ४६ ॥ तार्णं रविणा॥ ४७॥

कारकांशाच्चतुर्थे शनिराहुभ्यां मिलिताभ्यां स्थिताभ्यां शिलागृहनिर्माणकर्त्ता भवति । कुजकेतुभ्यां मिलिताभ्यां स्थिताभ्यामैष्टिकमिष्टिकासम्बन्धिगृहकर्त्ता भवति । गुरुणा दारुसम्बन्धि गृहं काष्ठगृहमित्यर्थः । रविणा तार्णं तृणोद्भवं गृहं करोति ॥ ४४–४७ ॥

अथ कारकांशान्नवमफलमाह ।

समे शुभदृग्योगाद्धर्मनित्यः सत्यवादी गुरुभक्तश्च॥४८॥

## अन्यथा पापैः ॥ ४९ ॥

समे कारकांशान्नवमे शुभदृग्योगान्नित्यं धर्मकर्त्ता सत्यवादी गुरुभक्तश्च नरो भवति । पापैरन्यथा अर्थात् पापग्रहस्य दृग्योगाद्धर्मनित्यादि न भवतीति ॥ ४८-४९ ॥

## शनिराहुभ्यां गुरुद्रोहः ॥ ५० ॥

कारकांशान्नवमे शनिराहुभ्यां स्थिताभ्यां तद्द्रष्टृभ्यां वा गुरुणा सह द्रोहकृद्भवति ॥ ५० ॥

## गुरुरविभ्यां गुरावविश्वासः ॥ ५१ ॥

गुरुरविभ्यां मिलिताभ्यां स्थिताभ्यां तद्द्रष्टृभ्यां वा गुरावविश्वासको भवति ॥ ५१ ॥

## तत्र भृग्वङ्गारकवर्गे पारदारिकः ॥ ५२ ॥

कारकांशान्नवमे भृग्वङ्गारकवर्गे शुक्रभौमान्यतरषड्वर्गे पारदारिकः परदारासक्तो भवति ॥ ५२ ॥

## दृग्योगाभ्यामधिकाभ्यामामरणम् ॥ ५३ ॥

तत्र कारकांशान्नवमे भौमशुक्रान्यतरषड्वर्गे भौमशुक्रयोर्दृग्योगाभ्यामित्येवाधिकाभ्यामामरणं मरणपर्यन्तं परस्त्रीसक्तो भवति ॥ ५३ ॥

## केतुना प्रतिबन्धः ॥ ५४ ॥

तत्र यदि केतोर्दृग्योगश्चेत् तदा प्रतिबन्धकः स्यादर्थान्मरणपर्यन्तं परस्त्रीसक्तो न स्यादिति ॥ ५४ ॥

## गुरुणा स्त्रैणः ॥ ५५ ॥

कारकांशान्नवमे गुरुणा युक्ते वा दृष्टे स्त्रैणः स्त्रीलोलः स्यात् ॥ ५५ ॥

## राहुणाऽर्थनिवृत्तिः ॥ ५६ ॥

कारकांशान्नवमे शुक्रभौमान्यतरषड्वर्गे राहुणा युक्ते वा दृष्टे परस्त्रीनिमित्तं द्रव्यनिवृत्तिर्धननाशः स्यात् ॥ ५६ ॥

अथ कारकांशात् सप्तमफलमाह ।

लाभे चन्द्रगुरुभ्यां सुन्दरी ॥ ५७ ॥

कारकांशात् सप्तमे चन्द्रगुरुभ्यां मिलिताभ्यां स्थिताभ्यां तस्य सुन्दरी स्त्री भवति ॥ ५७ ॥

राहुणा विधवा ॥ ५८ ॥

कारकांशात् सप्तमे राहुणा युक्ते विधवा स्त्री गृहे भवति ॥ ५८ ॥

शनिना वयोधिका रोगिणी तपस्विनी वा ॥ ५९ ॥

कारकांशात् सप्तमे शनौ चेत् तदा तस्य स्त्री वयोधिका वा रोगिणी वा तपस्विनी भवति ॥ ५९ ॥

कुजेन विकलाङ्गी ॥ ६० ॥ रविणा स्वकुले गुप्ता च ॥ ६१ ॥

कारकांशात् सप्तमे भौमे स्त्री विकलाङ्गी रवौ चेत् तदा स्वकुले गुप्ता रक्षिता चकाराद्विकलाङ्गी चेति ॥ ६०–६१ ॥

बुधेन कलावती ॥ ६२ ॥

बुधेन युक्ते कारकांशात् सप्तमे कलावती गीतवाद्यादिकलासु कुशला स्त्री भवति ॥ ६२ ॥

चापे चन्द्रेणानावृते देशे ॥ ६३ ॥

कारकांशाच्चतुर्थे चन्द्रे पूर्वोक्तयोगप्राप्तौ अनावृतेऽनाच्छादिते देशे प्रथमस्त्रीसङ्गः स्यात् ॥ ६३ ॥

अथ तृतीयफलमाह ।

कर्मणि पापे शूरः ॥ ६४ ॥

कारकांशात् तृतीये पापे शूरो वीरः स्यात् ॥ ६४ ॥

## शुभे कातरः ॥ ६५ ॥

कारकांशात् तृतीये शुभग्रहे कातरो भीरुः स्यात् ॥ ६५ ॥

## मृत्युचित्तयोः पापे कर्षकः ॥ ६६ ॥

कारकांशात् तृतीयषष्ठयोः पापे पापग्रहे स्थिते कर्षकः कृषिकर्त्ता स्यात् ॥ ६६ ॥

## समे गुरौ विशेषेण ॥ ६७ ॥

कारकांशान्नवमे गुरौ विशेषेण कृषिकर्त्ता स्यात् ॥ ६७ ॥

## उच्चे शुभे शुभलोकः ॥ ६८ ॥

कारकांशादुच्चे द्वादशे शुभे शुभग्रहे स्थिते शुभलोकप्राप्तिः ॥ ६८ ॥

## केतौ कैवल्यम् ॥ ६९ ॥

कारकांशाद्द्वादशे केतौ कैवल्यं मुक्तिः स्यात् ॥ ६९ ॥

## क्रियचापयोर्विशेषेण ॥ ७० ॥

क्रियचापयोर्मीनकुलीरयो राश्योः कारकांशाद्द्वादशस्थयोः केतुयोगे सति विशेषेण कैवल्यम् । चरदशायामत्र शुभः केतुः ।

तथा ।

"गुरुध्वजकविज्ञाः स्युर्यथापूर्वं शुभग्रहाः" ।

इत्युक्त्वा केतौ शुभत्वमृषिणा प्रोक्तमिति ॥ ७० ॥

## पापैरन्यथा ॥ ७१ ॥

कारकांशाद्द्वादशे पापैः पापग्रहैरन्यथा न मुक्तिर्न शुभलोकश्चेति॥७१॥

## रविकेतुभ्यां शिवे भक्तिः ॥ ७२ ॥

कारकांशतो द्वादशस्थिताभ्यां रविकेतुभ्यां शिवे भक्तिर्भवति । पञ्चमेऽप्येवम् ॥ ७२ ॥

चन्द्रेण गौर्याम् ॥ ७३ ॥ शुक्रेण लक्ष्म्याम्॥७४॥ कुजेन स्कन्दे ॥ ७५ ॥ बुधशनिभ्यां विष्णौ ॥ ७६ ॥ गुरुणा साम्बशिवे ॥७७॥ राहुणा तामस्यां दुर्गायां च॥७८॥ केतुना गणेशे स्कन्दे च ॥ ७९ ॥

तामस्यां भूतादिदेवतायां शेषं स्पष्टम् ॥ ७३-७९ ॥

पापर्क्षे मन्दे क्षुद्रदेवतासु ॥ ८० ॥

कारकांशे तद्द्वादशे च पापराशौ स्थिते शनौ क्षुद्रदेवतासु यक्षिणी-कर्णपिशाच्यादिषु भक्तिर्भवति ॥ ८० ॥

शुक्रे च ॥ ८१ ॥

कारकांशे तद्द्वादशे वा पापराशौ स्थिते शुक्रे च क्षुद्रदेवतासु भक्ति-रित्यर्थः ॥ ८१ ॥

अमात्यदासे चैवम् ॥ ८२ ॥

कारकान्न्यूनोऽमात्यकारकस्तदाऽमात्यदासेऽमात्यकारकाद्व्यादिगण-नया षष्ठे ग्रहे स्थिते क्षुद्रदेवतासु भक्तिरित्यर्थः । अथ वा यथा कारकांशात् तद्द्वादशाद्वा विचारः क्रियते तथैवामात्यकारकाद्दासे षष्ठे चैवं विचारः कर्त्तव्य इति । अथ वाऽमात्यकारकस्य यो दासोऽनुचरोऽर्थाज्ज्ञातृकारकस्त-स्माद्भक्तिविचारः कर्त्तव्यः । अनेनैवाशयेनाग्रे ऋषिणा "अमात्यानुचराद्देव-ताभक्तिः"-इति सूत्रं प्रणीतम् । अत्रायमेव पक्षो युक्तः । यतः शनिना शुक्रेणामात्यदासेन च फलसाम्ये पापर्क्षे मन्दे शुक्रेऽमात्यदासे च क्षुद्रदे-वतासु इति सूत्रं प्रणीतं स्यादथ वा शुक्रामात्यदासाभ्यां फलसमत्वे शु-क्रामात्यदासयोश्चैवमिति सूत्रं स्यात् । सूत्रत्रयपृथक्करणसामर्थ्यात् अमात्यकारकात् षष्ठभावेऽप्येवमेव भक्तिविचारः कर्त्तव्य इत्येवार्थः समु-चित इति ॥ ८२ ॥

त्रिकोणे पापद्वये मान्त्रिकः ॥ ८३ ॥

कारकांशात् त्रिकोणे पञ्चमनवमयोः पापद्वये प्राप्ते मान्त्रिको मन्त्रशास्त्रवेत्ता स्यात् ॥ ८३ ॥

पापदृष्टे निग्राहकः ॥ ८४ ॥

त्रिकोणे कारकांशात् पापद्वये पापदृष्टे तदा निग्रहकर्त्ता स्यात् ॥ ८४ ॥

शुभदृष्टेऽनुग्राहकः ॥ ८५ ॥

त्रिकोणे कारकांशात् पापद्वये शुभदृष्टेऽनुग्राहको लोकेष्वनुग्रहकर्त्ता स्यात् ॥ ८५ ॥

शुक्रेन्दौ शुक्रदृष्टे रसवादी ॥ ८६ ॥

कारकांशे चन्द्रे शुक्रेण दृष्टे रसवादी रसायनविद्यापटुर्भवति ॥ ८६॥

बुधदृष्टे भिषक् ॥ ८७ ॥

कारकांशे चन्द्रे बुधदृष्टे भिषग्वैद्यः स्यात् ॥ ८७ ॥

चापे चन्द्रे शुक्रदृष्टे पाण्डुश्वित्री ॥ ८८ ॥

कारकांशाच्चतुर्थे चन्द्रे शुक्रेण दृष्टे श्वेतकुष्ठी भवति ॥ ८८ ॥

कुजदृष्टे महारोगः ॥ ८९ ॥

कारकांशाच्चतुर्थे चन्द्रे भौमेन दृष्टे महारोगः कुष्ठी भवति ॥ ८९ ॥

केतुदृष्टे नीलकुष्ठम् ॥ ९० ॥

कारकांशाच्चतुर्थे चन्द्रे केतुदृष्टे सति नीलकुष्ठं स्यात् ॥ ९० ॥

तत्र मृतौ वा कुजराहुभ्यां क्षयः ॥ ९१ ॥

तत्र कारकांशाच्चतुर्थे मृतौ पञ्चमे वा कुजराहुभ्यां मिलिताभ्यां स्थिताभ्यां क्षयरोगवान् स्यात् ॥ ९१ ॥

चन्द्रदृष्टौ निश्चयेन ॥ ९२ ॥

कारकांशाच्चतुर्थे पञ्चमे वा स्थितयोः कुजराह्वोरुपरि चन्द्रदृष्टौ सत्यां निश्चयेन क्षयरोगो भवति ॥ ९२ ॥

कुजेन पिटकादिः ॥ ९३ ॥

कारकांशाच्चतुर्थे पञ्चमे वा कुजेन पिटकादिरोगो भवति ॥ ९३ ॥

केतुना ग्रहणी जलरोगो वा ॥ ९४ ॥

कारकांशाच्चतुर्थे पञ्चमे वा केतुना ग्रहणी संग्रहणी जलरोगो जलोदरो वा स्यात् ॥ ९४ ॥

राहुगुलिकाभ्यां क्षुद्रविषाणि ॥ ९५ ॥

कारकांशाच्चतुर्थे पञ्चमे वा राहुगुलिकाभ्यां स्थिताभ्यां क्षुद्रविषाणि भवन्ति ॥ ९५ ॥

तत्र शनौ धानुष्कः ॥ ९६ ॥

पञ्चमेति पदं निवृत्तम् । कारकांशाच्चतुर्थे शनौ धानुष्को धनुषि निपुणः स्यात् ॥ ९६ ॥

केतुना घटिकायन्त्री ॥ ९७ ॥

कारकांशाच्चतुर्थस्थकेतुना घटीयन्त्रनिर्माता भवति ॥ ९७ ॥

बुधेन परमहंसो लगुडी वा ॥ ९८ ॥ राहुणा लोहयन्त्री ॥ ९९ ॥ रविणा खड्गी ॥१००॥ कुजेन कुन्ती ॥ १०१ ॥

स्पष्टम् ॥ ९८ ॥ १०१ ॥

मातापित्रोश्चन्द्रगुरुभ्यां ग्रन्थकृत् ॥ १०२ ॥

कारकांशात् पञ्चमे कारकांशे वा चन्द्रगुरुभ्यां स्थिताभ्यां ग्रन्थकृत् ग्रन्थकर्त्ता ॥ १०२ ॥

शुक्रेण किञ्चिदूनम् ॥ १०३ ॥

कारकांशात् पञ्चमे कारकांशे वा चन्द्रशुक्राभ्यां स्थिताभ्यां किञ्चिदूनं ग्रन्थकर्त्तृत्वं स्यात् । अग्रे शुक्रेण फलस्य वक्ष्यमाणत्वादत्र चन्द्रशुक्राभ्यामित्यर्थो युक्तः ॥ १०३ ॥

बुधेन ततोऽपि ॥ १०४ ॥ शुक्रेण कविर्वाग्मी काव्यज्ञश्च ॥ १०५ ॥ गुरुणा सर्वविद्ग्रान्थिकश्च ॥ १०६ ॥ न वाग्मी ॥ १०७ ॥ विशिष्य वैयाकरणो वेदवेदाङ्गविच्च ॥ १०८ ॥ सभाजडःशनिना ॥ १०९ ॥ बुधेन मीमांसकः ॥११०॥ कुजेन नैयायिकः ॥१११॥ चन्द्रेण सांख्ययोगज्ञः साहित्यज्ञो गायकश्च ॥ ११२ ॥ रविणा वेदान्तज्ञो गीतज्ञश्च ॥११३॥ केतुना गणितज्ञः ॥११४॥ गुरुसम्बन्धेन सम्प्रदायसिद्धिः ॥ ११५ ॥

सर्वत्रैव योगे गुरुसम्बन्धेन गुरोर्योगदृष्टिपड्वर्गादिरूपसम्बन्धेन पूर्वोक्तग्रन्थकर्त्तृत्वादिकं स्यात् ॥ १०४–११५ ॥

भाग्ये चैवम् ॥ ११६ ॥

कारकांशाच्चतुर्थे यथा विद्याविचारः क्रियते तथा भाग्ये द्वितीयेऽपि विचारः कार्यः ॥ ११६ ॥

सदा चैवमित्येके ॥ ११७ ॥

सदा कारकांशात् तृतीयेऽप्येवं विचारः कर्त्तव्य इति एके वदन्ति ॥११७॥

भाग्ये केतौ पापदृष्टे स्तब्धवाक् ॥ ११८ ॥

कारकांशाद्भाग्ये द्वितीये केतौ स्थिते सति स्तब्धवाक् शीघ्रोत्तरदानासमर्थो भवति ॥ ११८ ॥

## स्वपितृपदाद्भाग्यरोगयोः पापसाम्ये केमद्रुमः ॥ ११९ ॥

स्वपितृपदात् कारकाज्जन्मलग्नाज्जन्मलग्नपदाद्वा भाग्यरोगयोर्द्वितीयाष्टमस्थानयोः पापसाम्ये सति केमद्रुमयोगो भवति ।

तथा च वृद्धाः ।

"आरूढाज्जन्मलग्नाद्वा पापौ स्त्रीहानिगौ यदि ।
केवलौ सग्रहत्वेऽपि समसंख्यौ शुभाशुभौ ॥
चन्द्रदृष्टौ विशेषेण योगः केमद्रुमो मतः"-इति ।

यत् तु "कारकलग्नारूढेभ्य इति स्वामिभिरुक्तं तद्वृद्धसम्मतं न" इति श्रीनीलकण्ठेन प्रतिपादितं तदसङ्गतम् । कारकप्रकरणे पठितत्वात् तथा स्वशब्दस्य कारकपदबोधकत्वादयमेवार्थः समीचीन इति ॥ ११९ ॥

## चन्द्रदृष्टौ विशेषेण ॥ १२० ॥

स्पष्टम् ॥ १२० ॥

## सर्वेषां चैव पाके ॥ १२१ ॥

## इति जैमिनिसूत्रे प्रथमाध्यायस्य द्वितीयः पादः ।

पूर्वोक्तानि फलानि कदा भविष्यन्तीत्याशङ्कायामाह । सर्वेषां राशीनां ग्रहाणां वा पाके दशायाम् । अथ सर्वेषां ग्रहाणां राशीनां वा दशारम्भकाले केमद्रुमयोगविचारः कार्यः ।

उक्तं च वराहेण ।

"इति निगदिता योगाः सार्धं फलैरिह नाभसाः ।
नियतफलदाश्चिन्त्या ह्येते समस्तदशास्वपि" ॥ १२१ ॥

इति सूत्रार्थप्रकाशिकायां प्रथमे द्वितीयः पादः ।

## अथ पदम् ॥ १ ॥

अथेत्यनन्तरं "यावदीशाश्रयं पदमृक्षाणाम्"-इति सूत्रसिद्धं पदमवलम्ब्य फलमुपदिशति ॥ १ ॥

## व्यये सग्रहे ग्रहदृष्टे श्रीमन्तः ॥ २ ॥

व्यये पदादेकादशे सग्रहे केन चिद्ग्रहेण शुभेन पापेन वा सहिते वा दृष्टे पुरुषः श्रीमान् स्यात् ॥ २ ॥

## शुभैर्न्याय्यो लाभः ॥ ३ ॥

शुभग्रहैर्युक्तदृष्टे लग्नपदाल्लाभे लाभो न्याय्यो न्यायमार्गाल्लाभः स्यात्॥३॥

## पापैरमार्गेण ॥ ४ ॥

पापग्रहैर्युक्तदृष्टे तस्मिन्नमार्गेण कुत्सितवृत्त्या लाभः स्यादिति । अनेनैव मिश्रग्रहयुतदृष्टे मिश्रप्रकारेण लाभः स्यादिति सूचितम् ॥ ४ ॥

## उच्चादिभिर्विशेषात् ॥ ५ ॥

उच्चादिभिः स्थितैर्ग्रहैरर्थात् उच्चस्वराशिमूलत्रिकोणादिगतैर्ग्रहैर्विशेषाल्लाभः स्यात् ॥ ५ ॥

## नीचे ग्रहदृग्योगाद्व्ययाधिक्यम् ॥ ६ ॥

नीचे लग्नपदाद्द्वादशे ग्रहदृग्योगाद्व्ययाधिक्यं स्यात् । अत्रापि पूर्ववदेव शुभपापाभ्यां योगः । द्वादशे शुभे सत्कर्मणि व्ययः । पापे नीचकर्मणि व्ययः मिश्रे मिश्रप्रकारेण व्ययः ॥ ६ ॥

## रविराहुशुक्रैर्नृपात् ॥ ७ ॥

पदाद्द्वादशगै रविराहुशुक्रैः सद्भिर्नृपाद्राज्ञो व्ययः ॥ ७ ॥

## चन्द्रदृष्टौ निश्चयेन ॥ ८ ॥

पदाद्द्वादशे रव्यादिग्रहे स्थिते चन्द्रदृष्टौ सत्यां निश्चयेन राजमूलाद्व्यय इति ॥ ८ ॥

## बुधेन ज्ञातिभ्यो विवादाद्वा ॥ ९ ॥

बुधेन पदाद्द्वादशगेन ज्ञातिनिमित्तं ज्ञातिपोषणे वा विवादाज्ज्ञाकटकादिभिर्व्ययः स्यात् ॥ ९ ॥

## ग्ग करमूलात् ॥ १० ॥

पदाद्द्वादशस्थेन गुरुणा करमूलाद्व्ययः ॥ १० ॥

## कुजशनिभ्यां भ्रातृमुखात् ॥ ११ ॥

कुजशनिभ्यां पदाद्द्वादशे स्थिताभ्यां भ्रात्रादिभिर्व्ययः स्यात् ॥११॥

## एतैर्व्यय एवं लाभः ॥ १२ ॥

एतैर्ग्रहैरेवं व्ययस्थैर्व्ययो लाभस्थैर्लाभः ।

अत्र वृद्धसम्मतिः ।

"आरूढाल्लाभभवनं ग्रहः पश्येत् तु न व्ययम् ।
यस्य जन्मनि सोऽपि स्यात् प्रबलो धनवानपि ॥
द्रष्टृग्रहाणां बाहुल्ये तदा द्रष्टरि तुङ्गगे ।
सार्गले चापि तत्रापि बह्वर्गलसमागमे ॥
शुभग्रहार्गले तत्र तत्राप्युच्चग्रहार्गले ।
सुखानि स्वामिना दृष्टे लग्नभाग्याधिपेन वा ॥
जातस्य पुंसः प्राबल्यं निर्दिशेदुत्तरोत्तरम्"-इति ॥ १२ ॥

अथ पदात् सप्तमफलमाह ।

## लाभे राहुकेतुभ्यामुदररोगः ॥ १३ ॥

पदात् सप्तमे राहुकेतुभ्यां स्थिताभ्यामुदररोगः स्यात् । तत्र द्वयोरेकराशिगतत्वाभावात् पृथक् पृथक् फलमूह्यम् ॥ १३ ॥

## तत्र केतुना झटिति ज्यानिलिङ्गानि ॥ १४ ॥

तत्र पदाद्द्वितीये केतौ स्थिते झटिति ज्यानिलिङ्गानि वार्धक्यचिह्नानि भवन्ति । यत् तु "स्वाभ्यादिभिर्लाभपदानुवृत्त्या तत्र सप्तमेति" उक्तं तदसङ्गतम् । एवं चेत् तदा केतुना झटिति ज्यानिलिङ्गानि इत्येवं सूत्रं स्यात् । तथा चाग्रे चन्द्रगुरुशुक्रेषु स्थितेषु धनवत्त्वयोगप्रतिपादनात् सप्तमे धनयोगाभावाच्चेति ॥ १४ ॥

## चन्द्रगुरुशुक्रेषु श्रीमन्तः ॥ १५ ॥

पदाद्द्वितीये चन्द्रगुरुशुक्रेषु स्थितेषु श्रीमन्तः स्युः ॥ १५ ॥

## उच्चेन वा ॥ १६ ॥

पदाद्द्वितीये उच्चं गतेन ग्रहेण शुभेन पापेन वा श्रीमन्त इत्यर्थः । अत्र वृद्धसम्मतिः ।

"आरूढात् षष्ठभे पापे चोरः स्याच्छुभवर्जिते ।
आरूढाद्वाऽपि सौम्ये तु सर्वदिश्यधिपो भवेत् ॥
सर्वज्ञस्तत्र जीवे स्यात् कविर्वादी च भार्गवे" ।

इति षष्ठभे द्वितीये वाऽपि द्वितीये च ॥ १६ ॥

## स्वांशवदन्यत् प्रायेण ॥ १७ ॥

अन्यदत्रानुक्तं फलं स्वांशवत् कारकांशवज्ज्ञेयम् ॥ १७ ॥

## लाभपदे केन्द्रे त्रिकोणे वा श्रीमन्तः ॥१८॥

लाभपदे सप्तमभावपदे लग्नपदात् केन्द्रे त्रिकोणे वा स्थिते श्रीमन्तो भवन्ति ॥ १८ ॥

## अन्यथा दुःस्थे ॥ १९ ॥

दुःस्थे षष्ठाष्टमद्वादशादिदुष्टस्थानगे अन्यथा श्रीमन्तो नेत्यर्थः॥१९॥

## केन्द्रत्रिकोणोपचयेषु द्वयोर्मैत्री ॥ २०॥

लग्नपदात् सप्तमपदे केन्द्रत्रिकोणोपचयेषु षष्ठव्यतिरिक्तेषु स्थिते द्वयोः स्त्रीपुंसोः परस्परं मैत्री । अनयैव रीत्या लग्नपदात् पञ्चमपदे केन्द्रे त्रिकोणोपचयगे पुत्रेण सह मैत्री भ्रातृस्थानस्य पदे एतत्स्थानगे भ्रात्रा मैत्री इत्यादिकमेवमूह्यम् ॥ २९ ॥

## रिपुरोगचिन्तासु वैरम् ॥ २१ ॥

लग्नपदात् सप्तमपदे रिपुरोगचिन्तासु गते द्वादशाष्टमषष्ठगे वैरं स्त्रीपुंसोर्वैरम् । एवमन्येषामपि ।

तथा च वृद्धाः ।

"लग्नारूढं दारपदं मिथः केन्द्रगतं यदि ।
त्रिलाभे वा त्रिकोणे वा तथा राजाऽन्यथाऽधमः ॥
आरूढौ पुत्रपित्रोस्तु त्रिलाभे केन्द्रगौ यदि ।
द्वयोर्मैत्री त्रिकोणे तु साम्यं द्वेषोऽन्यथा भवेत् ॥
एवं दारादिभावानामपि पत्यादिमित्रता ।
जातकद्वयमालोक्य चिन्तनीयं विचक्षणैः"-इति ॥ २१ ॥

## पत्नीलाभयोर्दिष्ट्या निराभासार्गलया ॥२२॥

पत्नीलाभयोर्लग्नपदतत्सप्तमयोर्निराभासार्गलया प्रतिबन्धकरहितार्गलया दिष्ट्या भाग्यवन्तः । अत्र दिष्टमेव दिष्ट्यं भागधेयं येषां ते दिष्ट्या इति ॥ २२ ॥

## शुभार्गले धनसमृद्धिः ॥ २३ ॥

तत्र लग्नपदतत्सप्तमयोः शुभार्गले शुभग्रहार्गले धनसमृद्धिर्धनवृद्धिः स्यात् । पापग्रहकृतार्गले धनवत्त्वमात्रमित्यवगम्यते । शुभपापकृतार्गले कदा चिद्धनवृद्धिः कदा चिद्धनवत्त्वैवेति ।

अत्र प्राचीनैरुक्तम् ।

"यस्य पापः शुभो वाऽपि ग्रहस्तिष्ठेच्छुभार्गले ।
तेन दृष्टेक्षितं लग्नं प्राबल्यायोपकल्प्यते ॥
यदि पश्येद्ग्रहस्तं न विपरीतार्गलस्थितः"-इति ॥ २३ ॥

## जन्मकालघटिकास्वेकदृष्टासु राजानः ॥ २४ ॥

जन्मलग्नं प्रसिद्धम् । काललग्नं होरालग्नं घटिकालग्नं चैतेषु केनचिदेकेनैव ग्रहेण दृष्टेषु राजानो भवन्ति । अत्रैकग्रहदृष्टिविषयत्वमपेक्षितम्। न त्वेकग्रहमात्रदृष्टत्वम् । काललग्नानयनं "सर्वत्रासवर्णाभावा राशयश्च" एतत्सूत्रे प्रदर्शितम् ।

घटिकालग्नानयनं तु वृद्धैरुक्तम् ।

"लग्नादेकघटीमात्रं याति लग्नं दिने दिने ।
परन्तु घटिकालग्नं निर्दिशेत् कालवित्तमः" ॥

पूर्वयुक्त्या घटिकालग्नमपि सूर्यादेव गणनीयमिति ॥ २४ ॥

## पत्नीलाभयोश्च राश्यंशकदृक्काणैर्वा ॥ २५ ॥

राश्यंशकदृक्काणैः पत्नीलाभयोर्लग्नसप्तमयोरेकग्रहदृष्टयो राजानो भवन्ति । राशिर्जन्मराशिः । अर्थाद्राशिकुण्डल्यां नवमांशकुण्डल्यां द्रेष्काणकुण्डल्यां च यानि लग्नानि यानि तत्सप्तमानि च तानि यद्येकग्रहदृष्टानि तदा राजानो भवन्ति । एवं षट्स्वपि दृष्टेषु राजयोगः पूर्णो न्यूनेषु न्यूनः ॥२५॥

## तेष्वेकस्मिन् न्यूने न्यूनम् ॥ २६ ॥

तेषु जन्मकालघटिकासु राश्यंशदृक्काणादिकेषु चैकग्रहदृष्ट्या न्यूनेषु न्यूनं राजयोगः स्यादिति ॥ २६ ॥

## एवमंशतो दृक्काणतश्च ॥ २७ ॥

एवमंशतो दृक्काणतश्च राजयोगविचारः कार्यः । अर्थात् यथा जन्मकालघटिकासु एकदृष्टासु तथैव तेषामंशभेदेन दृक्काणभेदेनापि विचारः कर्त्तव्यः । अर्थात् जन्मकालघटिकासु नवांशरूपजन्मकालघटीषु दृक्काणरूपजन्मकालघटिकासु चैकदृष्टासु राजानो भवन्ति ।

तथा च वृद्धाः ।

"विलग्नघटिकालग्नहोरालग्नानि पश्यति ।
उच्चग्रहे राजयोगो लग्नद्वयमथापि वा ॥
राशेर्दृक्काणतोऽंशाच्च राशेरंशादथापि वा ।
यद्वा राशिदृकाणाख्यां लग्नदृष्टा तु योगदः ॥
प्रायेणायं जातकेषु प्रभूणामेव दृश्यते ।

अन्यच्च ।

"जन्मकालघटीलग्नेष्वेकेनैवेक्षितेषु तु ।

उच्चारूढे तु संप्राप्ते चन्द्राक्रान्ते विशेषतः ॥
क्रान्ते वा गुरुशुक्राभ्यां केनाप्युच्चग्रहेण वा ।
दुष्टार्गलग्रहाभावे राजयोगो न संशयः ॥

अन्यच्च ।

"निशार्धाच्च दिनार्धाच्च परं सार्धद्विनाडिका ।
शुभा तदुद्भवो राजा धनी वा तत्समोऽपि वा"-इति ॥

पदादन्यदपि फलं वृद्धैरुक्तम् ।

"शुभारूढे तत्र चन्द्रे धने देवगुरुस्तथा ।
उच्चदृष्टग्रहे वाऽर्थेऽप्युच्चखेटेऽथ वा तथा" ॥

अन्यच्च ।

"शुभारूढे तत्र चन्द्रे धने देवगुरौ स्थिते ।
आरूढेऽस्मिञ्छुक्रदृष्टे वाहनाथो भवेन्नरः" ॥

तथा पूर्वोक्तयोगा जन्मलग्नादपि विचारणीयाः ।

तथा च ।

"आरूढयोगाः सर्वेऽपि जन्मलग्नेऽपि ते स्मृताः ।
जन्मलग्नाच्छुभेऽस्तस्थे तृतीये पापखेचरे ॥
चतुर्थेऽपि शुभे प्राप्ते राजा वा तत्समोऽपि वा ।
चतुर्थकामार्थलाभपतिदृष्टे च लग्नभे ॥
आरूढलाभे कविना दृष्टेऽप्याढरूभे शुभे" ।

राजा वा तत्समोऽपि वेति पूर्वेणान्वयः ।

"उच्चो वा हरिणाङ्को वा जीवो वा शुक्र एव वा ।
एको बली धनगतः श्रियं दिशति देहिनाम्" ॥

लग्नाद्वा पदाद्वा धनगत इति वेदितव्यम् । अत्र धनपदं द्वितीयं नवमं च बोधयति ।

"लग्नं पश्यन्ति ये खेटास्ते सर्वे शुभदायिनः ।
नीचखेटोऽपि लग्नं चेत् पश्येद्राजा प्रकीर्त्तितः" ॥

राजयोगो जन्मलग्नं पश्येदुच्चग्रहो यदि ।
षष्ठाष्टमगते नीचे लग्नं पश्यति वा तथा ॥
षष्ठाष्टमभवौ खेटौ शुभौ यौ केन च श्रितौ ।
पश्यतो जन्मलग्नं चेद्राजयोग उदाहृतः ॥
त्रिकोणकेन्द्रस्थखेटदृष्टिर्लग्ने शुभप्रदा ।
चतुर्थनवमस्थस्य दृष्टिरत्युत्तमा स्मृता ॥
चतुर्थे शुभखेटश्चेद्राजयोग उदाहृतः ।
बलवान् स्याच्चतुर्थोऽपि चरादिषु यथोत्तरम् ॥
उच्चायुक्तो ग्रहः कश्चिल्लाभस्थो वा चतुर्थगः ।
धनस्थितो वा लग्नं चेत् पश्येद्वाहनकारकः" ॥

उच्चाद्युक्तग्रह उच्चो वा हरिणाङ्को वेत्यादिनिरुक्तग्रहः ।

"राजयोगाद्यभावे तु धनाधनविनिर्णयः ।
शुभपापदृशा लग्ने ततः केन्द्रादियोगतः" ॥

राजयोगाभावे लग्ने शुभदृष्ट्या धनं पापदृष्ट्या धनरहितम् । केन्द्रे शुभे धनं पापे धनाभाव इत्यादिप्रकारेणोह्यम् ।

"यस्य लग्नांशके सौम्यः प्राबल्यं तस्य निश्चितम् ।
लग्नांशकेन्द्रेषु शुभे निग्रहानुग्रहक्षमः ॥
लग्नत्रिकोणे द्वौ पापौ मिलितौ यदि पश्यतः ।
जन्मलग्नं विशेषेण योगो दारिद्र्यनामकः ॥
एवं धनेऽपि द्रष्टव्यं महादारिद्र्यकारकम्" ।

त्रिकोणवदेव धने आरूढाद्द्वितीये द्वौ पापौ मिलितौ सन्तौ पश्यतश्चेत् तदा महादारिद्र्ययोगः स्यात् ।

"पापारूढे पापखेटे तत्रस्थे व्ययगे रवौ ।
चन्द्रे राहौ च तद्दृष्टे व्यये निर्धन एव सः ॥
अष्टमक्षेत्रपतिना दृष्टेऽन्येनावलोकिते ।

पापारूढे तथा लग्ने स्थिरोभयचराश्रिते ॥
नीचग्रहेण संदृष्टे पापारूढे तथा गृहे ।
अन्येन वीक्षिते मिश्रे योगो मिश्रं वदेद्बुधः ॥
ऐश्वर्यं स्याच्छुभारूढे पापारूढे दरिद्रता ।
तारतम्यविधिं ज्ञात्वा फलं ब्रूयाद्विचक्षणः ॥
चन्द्रारूढवशात् सर्वं लग्नारूढवशात् ततः ।
दारिद्र्यराजयोगादीन् सर्वान् योगान् प्रचिन्तयेत् ॥
चन्द्रारूढवशात् प्रश्नं निर्णयाद्बुद्धिमान्नरः ।
भावग्रहात् कारकाच्च मिश्रचिन्ताफलं विदुः ॥
केचित् तत्तद्ग्रहारूढं तत्तद्भावाधिपात् क्रमात् ।
त्रिकोणाष्टमगे पापे युद्धपापभयामयाः" ॥

अस्यार्थः । यद्राशेस्त्रिकोणाष्टमगे पापे तद्राशिदशायां युद्धं स्यात् । पापकर्म स्यात् । भयं स्यात् । आमयो दीर्घरोगश्च स्यादिति ।

"तृतीयषष्ठगे पापे प्राबल्यं शत्रुनिग्रहः ।
शुभेषु विपरीतं स्यात् प्राप्त्यलाभो व्ययस्थिते ॥
जयप्रदः शुभो राशिरशुभोऽत्राजयप्रदः ।
शुभराशिगते पापे कष्टं पूर्वं ततः शुभम् ॥
पापराशिगते सौम्ये शुभं पूर्वं ततोऽशुभम् ।
शत्रुराशौ मित्रनाशो मित्रराशौ धनागमः ॥
उच्चराशौ भवेत् कीर्त्तिर्नीचे नीचत्वमाप्नुयात् ।
एतद्राशिफलं चिन्त्यं प्राधान्यात् पाकभोगयोः ॥
द्वितीये पञ्चमे सौम्ये राजप्रीतिर्जयो ध्रुवम् ।
पापे तृतीयषष्ठे च शत्रुनिग्रहणं जयः ॥
चतुर्थे तु शुभे सौख्यमारोग्यं त्वष्टमे शुभे ।
धर्मवृद्धिर्गुरुजनात् कष्टं च नवमे शुभे ॥

विपरीते विपर्यासो मिश्रे मिश्रं प्रकीर्त्तितम् ।
पाके भोगे च पापाढ्ये देहपीडा मनोव्यथा ॥
सप्तमे पाकभोगाभ्यां पापे दारार्त्तिरीरिता ।
चतुर्थे स्थानहानिः स्यात् पञ्चमेऽपत्यपीडनम् ॥
दशमे कीर्त्तिहानिः स्यान्नवमेऽपत्यपीडनम् ।
उक्तस्थाने गते सौम्ये तत्तत्सौख्यं विनिर्दिशेत् ॥
केन्द्रस्थाने गते सौम्ये लाभः शत्रुजयप्रदः ।
विपरीते विपर्यासो मिश्रे मिश्रं प्रकीर्त्तितम् ॥
जन्मकालग्रहस्थित्या गोचरस्थग्रहैरपि ।
विचारितैः प्रवक्तव्यं तत्तद्राशिदशाफलम्" ॥

अर्थाद्दशाप्रदराशेर्द्वितीयतृतीयादिस्थानस्थित्या तत्तद्राशिदशायां सुखदुःखादिलक्षणं फलं समुन्नेयमिति ।

अन्यच्च ।

"यश्च राशिः शुभाक्रान्तो यस्य पश्चाच्छुभग्रहः ।
तद्दशा शुभदा प्रोक्ता विपरीते विपर्ययः ॥
त्रिकोणरन्ध्ररिष्फस्थैः शुभपापैः शुभाशुभम्" ।

तत्तद्दशाप्रदराशिभिरिति विवेचनीयम् ।

अन्यच्च विशेषो वृद्धैरभिहितः ।

"मेषकर्कतुलानक्रराशीनां च यथाक्रमम् ।
बाधास्थानानि संप्रोक्ताः कुम्भगोसिंहवृश्चिकाः" ॥

अर्थाच्चराणां राशीनामेकादशो राशिर्बाधास्थानं भवति ।

"पाकेश्वरान्तराशेश्च बाधास्थाने शुभेतरे ।
स्थिते सति महाशोको बन्धनं द्रव्यनाशनम् ॥
उच्चस्वर्क्षग्रहे तस्मिञ्छुभे सौख्यं धनागमः ।
तच्छून्यं चेदसौख्यं स्यात् तद्दशा न फलप्रदा" ॥

अत्र पाकेश्वरो राशिर्दशाप्रदराशिः । दशापरिपाकहेतुत्वेन दशेश्वरत्वसंभवात् ।

वाधकव्ययषष्ठाष्टराहुभुक्तौ महद्भयम् ।
प्रस्थानं बन्धनं चैव व्याधिपीडार्थनाशनम् ॥
पाकेश्वरत्रिकोणे तु राहुकेतू स्थितौ यदि ।
तत्पाके बन्धनप्राप्तिराहुः पीडां रिपोर्भयम् ॥
रव्याररराहुशनयो भुक्तिराशौ स्थिता यदि ।
तद्राशिभुक्तौ पतनं राजकोपो महद्भयम् ॥
भुक्तिराशित्रिकोणे तु नीचखेटस्थितौ यदि ।
तद्राशौ वा नीचयुते ह्यपमृत्युभयं वदेत् ॥
भुक्तिराशौ स्वतुङ्गस्थे त्रिकोणे वा स्वतुङ्गभे ।
यदा भुक्तिदशा प्राप्ता तदा सौख्यं लभेन्नरः ॥
नगरग्रामनाथत्वं पुत्रलाभधनागमम् ।
कल्याणं भोगभाग्यं च सेनापत्यं महोन्नतम् ॥
पाकेश्वरो जीवदृष्टः शुभराशौ स्थितो यदि ।
तद्दशायां धनप्राप्तिर्मङ्गलं पुत्रसंभवः" ॥

फलादेशाय ग्रहाणां शत्रुराशयो वृद्धेनाभिहिताः ।

"सितासिताश्च युग्माश्च सूर्यस्य रिपुराशयः ।
कौर्पितौलिघटाश्चेन्दोर्भौमस्य रिपुराशयः ॥
घटमीननृयुक्तौलिकन्या ज्ञस्य ततः परम् ।
कर्कमीनालिकुम्भाश्च राशयो रिपवः स्मृताः ॥
मेषसिंहधनुःकौर्पिकर्कटाः शनिशत्रवः ।
वृषतौलिनृयुक्कन्याराशयो रिपवो गुरोः ॥
सिंहालिकर्कचापाश्च शुक्रस्य रिपुराशयः"-इति सुगमम् ।

"भुक्तिर्नवानां तुल्या स्यात्त्रिभाज्या नवधा दशा ।

दशेशस्थितराशीशं तत्केन्द्रादिस्थितास्ततः ॥
विन्द्यात् क्रमेण भुक्तांशांस्तद्वत् सूक्ष्मदशादिकम्" ।

अस्यार्थः । ग्रहाणां शास्त्रान्तरेष्वष्टोत्तरीविंशोत्तर्यादिरूपा दशा प्रसिद्धा। तत्र दशावर्षप्रमाणेनान्तर्दशादिकानामपि मानानि भवन्ति । प्रकृतशास्त्रेऽपि कारकदशा ग्रहाणां वक्ष्यमाणा । तत्रान्तर्दशा विभागे न किञ्चिद्वैषम्यम् । सममेव नवधा विभागं कृत्वा नवानां ग्रहाणामन्तर्दशा कल्पनीया । तत्र दशेश्वरस्य प्रथमाऽन्तर्दशा ततो दशेशाश्रितराशीशस्य ततस्तत्केन्द्रगतग्रहस्य ततः पणफरस्थस्य तत आपोक्लिमस्थस्य । तत्र बलिनः पूर्वम् । बलसाम्येऽधिकवर्षवतः पूर्वमिति ।

अन्यश्च विशेषः ।

"ये राजयोगदा ये च शुभमध्यगता ग्रहाः ।
यस्माद्वा द्वित्रितुर्याः स्युः शुभाशुभफलप्रदाः ॥
तद्दशासु शुभं ब्रूयाद्राजयोगादिसंभवम् ।
आरम्भे तत्त्रिकोणे तु सौम्येऽपि शुभमावहेत् ॥
गता शुभदशा मध्यं दशा सौम्यस्य शोभना ।
शुभो यस्य त्रिकोणस्थस्तद्दशाऽपि शुभप्रदा ॥
शुभराशौ शुभारम्भे दशा स्यादतिशोभना ।
नीचादौ तद्दशादन्ते भवेद्भाग्यविपर्ययः" ॥

अयमर्थः । दशारम्भराशावन्तराशौ च नीचखेटे सति दशारम्भान्तराशीशे वा नीचे सति दशारम्भात् त्रिकोणे वा नीचगे ग्रहे सति त्रिकोणेशे वा नीचगे सति विपरीतं भाग्यस्य भवतीत्यर्थः ।

"राहोः केतोश्च कुम्भादिवृश्चिकादिचतुष्टयम् ।
शुभं तत्र समारम्भे तद्दशायां शुभं भवेत्" ॥

राहुकेतुदशासमाप्तिरपि कुम्भादिचतुष्टये वृश्चिकादिचतुष्टये च शुभावहा ।

"यद्दशायां शुभं ब्रूयात् स चेन्मकरसंस्थितः ।

यस्मिन् राशौ दशान्तः स्यात् तस्मिन् दृष्टे युतेऽपि वा ॥
शुक्रेण विधुना वा स्याद्राजकोपाद्धनक्षयः ।
दशान्तश्चेदरिक्षेत्रे राहुदृष्टे युतेऽपि वा ॥
राहोर्दशान्ते सर्वस्वनाशो मरणबन्धने ।
देशान्निर्वासनं वा स्यात् कष्टं वा महदश्नुते ॥
तत्त्रिकोणगते पापे निश्चयं दुःखमादिशेत् ।
एवं शुभाशुभं सर्वं निश्चित्य प्रवदेद्बुधः ॥
दशारम्भे दशान्ते वा मकरे चेन्न शोभनम् ।
तस्मिन्नेव च राहौ चेन्निरोधो द्रव्यनाशनम् ॥

तस्मिन् मकरे इत्यर्थः ।

"यत्र क्वापि च भे राहौ दशारम्भोऽवसानकम् ।
गृहभ्रंशः समुद्दिष्टो धने राहुर्धनार्त्तिकृत् ॥
चन्द्रशुक्रौ द्वादशे चेद्राजकोपो महद्भयम् ।
भौमकेतू तत्र यदि बाधाऽग्नेर्महती भवेत्" ॥

दशारम्भसमाप्तिराशेर्द्वादशे चेदिदं फलं वेदितव्यमित्यलम् ॥ २७ ॥

## शुक्रचन्द्रयोर्मिथो दृष्टयोः सिंहस्थयोर्वा यानवन्तः ॥ २८ ॥

शुक्रचन्द्रयोर्मिथो दृष्टयोः परस्परं दृष्टयोर्यत्र कुत्रापि गतयोर्वा सिंहस्थयोः पदात् तृतीयस्थयोः । अत्र द्वितीये वाहनार्थवानित्यपि पाठः शुक्राच्चन्द्रे तृतीयगे वा चन्द्राच्छुक्रे तृतीयगे यानवन्तः स्युः ।

तथा चोक्तं वृद्धैः ।

"चन्द्रः कविं कविश्चन्द्रं पश्यत्यपि तृतीयगे ।
शुक्राच्चन्द्रे ततः शुक्रे तृतीये वाहनार्थवान्" ॥ २८ ॥

## शुक्रकुजकेतुषु वैतानिकाः ॥ २९ ॥

शुक्रकुजकेतुषु यत्र कुत्रापि गतेषु परस्परं दृष्टिमत्सु वैतानिका वितानादिराजचिह्नवन्तो भवन्तीत्यर्थः ॥ २९ ॥

## स्वभाग्यदारमातृभावसमेषु शुभेषु राजानः ॥ ३० ॥

आत्मकारकाद्भाग्ये द्वितीये दारे चतुर्थे मातरि पञ्चमे भावेऽष्टमे एतेषु समेषु शुभेषु राजानो भवन्ति । एवं पुत्रादिकारकवशात् पुत्रादीनामपि राजयोगो वाच्यः ॥ ३० ॥

## कर्मदासयोः पापयोश्च ॥ ३१ ॥

आत्मकारकात् कर्मदासयोस्तृतीयषष्ठयोः समयोः पापयोश्च सतो राजानो भवन्ति ॥ ३१ ॥

## पितृलाभाधिपाच्चैवम् ॥ ३२ ॥

लग्नाधिपात् सप्तमाधिपाच्चाप्येवमेव विचारः कार्यः । अर्थाल्लग्नाधिपात् सप्तमाधिपाच्चापि भाग्यदारमातृभावेषु समेषु शुभेषु तथा कर्मदासयोः पापयोश्च राजानो भवन्ति । अत्र लग्नशब्देन जन्मलग्नस्य पदलग्नस्यापि ग्रहणम् ॥ ३२ ॥

## मिश्रे समाः ॥ ३३ ॥

मिश्रग्रहे स्थिते अर्थात् पापमिलिते स्थिते समाः राजसमा भवन्तीत्यर्थः ॥ ३३ ॥

## दरिद्रा विपरीते ॥ ३४ ॥

विपरीते शुभस्थाने पापाः पापस्थाने शुभाश्चेत् स्युस्तदा दरिद्रा भवन्ति ॥ ३४ ॥

## मातरि गुरौ शुक्रे चन्द्रे वा राजकीयाः ॥ ३५ ॥

पितृलाभाधिपात् कारकाच्च मातरि पञ्चमे गुरौ वा शुक्रे वा चन्द्रे स्थिते राजकीया राजाधिकारिणो भवन्ति ॥ ३५ ॥

## कर्मणि दासे वा पापे सेनान्यः ॥ ३६ ॥

लग्नाधिपात् सप्तमाधिपात् कारकाच्च कर्मणि तृतीये वा दासे षष्ठभावे पापे स्थिते सेनान्यः सेनापतयो भवन्ति ॥ ३६ ॥

**स्वपितृभ्यां कर्मदासस्थदृष्ट्या तदीशदृष्ट्या मातृनाथदृष्ट्या च धीमन्तः ॥ ३७ ॥**

स्वपितृभ्यां कारकजन्मलग्नाभ्यां कर्मदासस्थतृतीयषष्ठस्थग्रहदृष्ट्या कारके लग्ने चेत्यर्थः । वा तदीशदृष्ट्या पञ्चमेशदृष्ट्या च धीमन्तो भवन्तीत्यर्थः ॥ ३७ ॥

**दारेशदृष्ट्या सुखिनः ॥ ३८ ॥**

कारकलग्नाभ्यां कारकलग्नयोरुपरि दारेशचतुर्थेशदृष्ट्या नराः सुखिनो भवन्ति ॥ ३८ ॥

**रोगेशदृष्ट्या दारिद्राः ॥ ३९ ॥**

कारकलग्नाभ्यां रोगेशस्याष्टमेशस्य तयोरुपरि दृष्ट्या दरिद्रा भवन्ति ॥३९॥

**रिपुनाथदृष्ट्या व्ययशीलाः ॥ ४० ॥**

कारकलग्नाभ्यां द्वादशेशदृष्ट्या व्ययाधिक्यकारिणो भवन्ति ॥ ४० ॥

**स्वामिदृष्ट्या प्रबलाः ॥ ४१ ॥**

कारके कारकेशदृष्ट्या लग्ने लग्नेशदृष्ट्या प्रबला बलवन्तो भवन्ति ॥४१॥

**पश्चाद्रिपुभाग्ययोर्ग्रहसाम्ये बन्धः कोणयो रिपुजाययोः कीटयुग्मयोर्दाररिष्फयोश्च ॥ ४२ ॥**

पश्चाल्लग्नात् कारकलग्नाच्च रिपुभाग्ययोर्द्वितीयद्वादशयोः कोणयोर्नवमपञ्चमयो रिपुजाययोर्द्वादशषष्ठयोः कीटयुग्मयोर्लाभतृतीययोर्दाररिष्फयोश्चतुर्थदशमयोर्ग्रहसाम्ये सति बन्धः स्यात् ॥ ४२ ॥

**एवमृक्षाणां तदीशानां च शुभसम्बन्धे निरोधमात्रं पापसम्बन्धाच्छृङ्खलाप्रहारादयः ॥ ४३ ॥**

एवं प्रोक्तानां द्विद्वादशाद्यृक्षाणां तदीशानां च शुभशम्बन्धे सति का-

रागृहे निरोधमात्रमेव न तु पीडादि । पापसम्बन्धाच्छृङ्खलाप्रहारादयोऽपि भवन्ति ॥ ४३ ॥

## शुक्राद्गौणपदस्थो राहुः सूर्यदृष्टो नेत्रहा ॥ ४४ ॥

शुक्राल्लग्नाद्गौणपदस्थः पञ्चमपदस्थो राहुः सूर्यदृष्टो नेत्रहा नेत्रनाशकरः ॥ ४४ ॥

## स्वदारगयोः शुक्रचन्द्रयोरातोद्यं राजचिह्नानि च ॥ ४५ ॥

## इति जैमिनिसूत्रे प्रथमाध्यायस्य तृतीयः पादः।

आत्मकारकाद्दारगयोश्चतुर्थस्थयोः शुक्रचन्द्रयोः सतोरातोद्यं वाद्यविशेषः । राजचिह्नानि छत्रचामरादीनि च भवन्तीति ॥ ४५ ॥

इति सूत्रार्थप्रकाशिकायां प्रथमे तृतीयः पादः ।

## उपपदं पदं पित्रनुचरात् ॥ १ ॥

अथोपपदमालम्ब्य फलं दर्शयति । तत्रादावुपपदं निरूपयति । पित्रनुचराल्लग्नद्वादशात् पदमुपपदम् । द्वादशभावस्य पदमुपपदम् । पितृलग्नमनुचरं द्वितीयं यस्येति व्युत्पत्तिरत्र कार्या । अथ वा पितृलग्नं तस्यानुचरो द्वितीयभावः । तस्य यत् पदं तल्लग्नस्योपपदमित्यप्यर्थः स्वामिनाऽभिहितः । वस्तुतस्तु द्वितीयभावाद्धनविचारस्य स्त्रीविचारस्य च शास्त्रान्तरप्रसिद्धत्वाद्द्वितीयभावस्य पदवशेनापि स्त्रीविचारः समुचितः । यत् तु कैश्चित् पित्र्यानुचरादिति पठं स्वीकृत्य सप्तमस्य पदमुपपदमित्यभिहितं तदपि युक्तम् । वास्तविकं तु लग्ने विषमे द्वितीयस्य पदमुपपदम् । लग्ने समे द्वादशस्य पदमुपपदम्-इति ॥ १ ॥

## तत्र पापस्य पापयोगे प्रव्रज्या दारनाशो वा ॥ २ ॥

तत्रोपपदे तद्द्वितीये वा । पापस्य राशौ पापयोगे वा प्रव्रज्या सन्यासः । स्त्रीनाशो वा स्यात् । तत्रेति पदेनाधिकारप्राप्तत्वादुपपदस्य ग्रहणम् । तथा संख्याप्राधान्यत्वादुपपदेन द्वितीयस्य ग्रहणम् ।

तथा च वृद्धाः ।

"आरूढात् षष्ठभे पापे चोरः स्याच्छुभवर्जिते ।
आरूढाद्वापि सौम्ये तु सर्वदिश्यधिपो भवेत् ॥
सर्वज्ञस्तत्र जीवे स्यात् कविर्वादी च भार्गवे" ।

आरूढादुपपदात् । षष्ठभे द्वितीये । वापि द्वितीये । न चोपपदादिति वक्तव्ये आरूढादिति कथमुक्तमिति वाच्यम् । उपपदस्यारूढात्वात् ॥ २ ॥

## नात्र रविः पापः ॥ ३ ॥

अत्र प्रकरणे रविः सूर्यो न पापः । तेन सिंहराशावुपपद्द्वितीये वा सूर्ये स्थिते इदं फलं न भवति ॥ ३ ॥

## शुभदृग्योगान्न ॥ ४ ॥

शुभग्रहस्य दृग्योदिदं फलं न भवति ॥ ४ ॥

## नीचे दारनाशः ॥ ५ ॥

उपपदे तद्द्वितीये वा नीचं गते ग्रहे दारनाशः स्यात् ॥ ५ ॥

## उच्चे बहुदारः ॥ ६ ॥

उपपदे तद्द्वितीये वा उच्चेशे वा तत्र उच्चगते ग्रहे पुरुषो बहुदारः स्यात् ॥ ६ ॥

## युग्मे च ॥ ७ ॥

उपपदतो द्वितीये वा युग्मे मिथुनराशौ सति बहुदारः स्यात् ॥ ७ ॥

## तत्र स्वामियुक्ते स्वर्क्षे वा तद्धेतावुत्तरायुषि निर्दारः ॥ ८ ॥

तत्रोपपदे तद्द्वितीये वा स्वामिना युक्ते वाऽन्यस्मिद् स्वराशौ तद्धेतौ तत्स्वामिनि उत्तरायुषि निर्दारो दाररहतः स्यात् । स्वामियुक्ते स्वर्क्षे वा तद्धेतौ दारकारके उत्तरायुषि निर्दारो दाररहितः स्यात् । अथ वा दारकारकस्य प्रसङ्गाभावात् तद्धेतुरिति पदेन तत्स्वामी एव बोध्यः ॥ ८ ॥

उच्चे तस्मिन्नुत्तमकुलाद्दारलाभः ॥ ९ ॥

तस्मिन्नुपपदद्वितीयेशे तत्कारके वा उच्चगते उत्तमकुलाद्दारलाभः ॥९॥

नीचे विपर्ययः ॥ १० ॥

नीचं गते उपपदद्वितीयेशे तत्कारके वा विपर्ययो नीचकुलात् स्त्रीलाभः ॥ १० ॥

शुभसम्बन्धात् सुन्दरी ॥ ११ ॥

उपपदाद्द्वितीये तत्कारके वा शुभवर्गदृग्योगे सति सुन्दरी स्त्री भवति॥ ११ ॥

राहुशनिभ्यामपवादात् त्यागो नाशो वा ॥ १२ ॥

उपपदाद्द्वितीये तत्कारके वा राहुशन्योर्योगे लोकापवादात् स्त्रियास्त्यागो नाशो वा स्यात् ॥ १२ ॥

शुक्रकेतुभ्यां रक्तप्रदरः ॥ १३ ॥ अस्थिस्रावो बुधकेतुभ्याम् ॥ १४ ॥ शनिरविराहुभिरस्थिज्वरः ॥ १५ ॥ बुधकेतुभ्यां स्थौल्यम् ॥ १६ ॥ बुधक्षेत्रे मन्दाराभ्यां नासिकारोगः ॥ १७ ॥ कुजक्षेत्रे च ॥ १८ ॥ गुरुशनिभ्यां कर्णरोगो नरहका च ॥ १९ ॥ गुरुराहुभ्यां दन्तरोगः ॥ २० ॥ शनिराहुभ्यां कन्यातुलयोः पङ्गुर्वातरोगो वा ॥ २१ ॥

उपपदद्वितीये तत्कारके वा शुक्रकेतुभ्यां रक्तप्रदररोगयुता स्त्री स्यात्। एवमेव सर्वत्र । कन्यातुलयोः कुम्भमीनयोः । यत् तु कन्यातुलान्यतरग इति नीलकण्ठेनोक्तं तदसङ्गतम् । कुम्भमीनयोः पदाभावात् तत्रैव योगघटनसंभवात् पूर्वप्रतिज्ञानुसाराच्चेति ॥ १३–२१ ॥

शुभदृग्योगान्न ॥ २२ ॥

उपपदे तद्द्वितीये च शुभयोगे शुभदृष्टौ वा पूर्वोक्तदोषा न स्युः ॥ २२॥

## सप्तमांशग्रहेभ्यश्चैवम् ॥ २३ ॥

उपपदाद्यः सप्तमो भावस्तस्मात् तदंशात् तत्स्वामिनोश्च एवं विचा-र: कार्यः ।

उक्तं च वृद्धेन ।

"सप्तमांशाद्द्वितीयस्थेऽप्येवं फलमुदाहृतम्" ॥ २३ ॥

## बुधशनिशुक्रेष्वनपत्यः ॥ २४ ॥

उपपदात् सप्तमांशग्रहेभ्यो नवमेषु बुधशनिशुक्रेषु अर्थात् उपपदात् सप्तमांशग्रहैर्बुधशनिशुक्राणां योगे सति अनपत्योऽपत्यरहितो भवति ॥२४॥

## पुत्रेषु रविराहुगुरुभिर्बहुपुत्रः ॥ २५ ॥

उपपदात् सप्तमांशग्रहेभ्यो नवमेषु रविराहुगुरुभिर्बहुपुत्रः ॥ २५ ॥

## चन्द्रेणैकपुत्रः ॥ २६ ॥

सप्तमांशग्रहेभ्यो नवमे चन्द्रेणैकपुत्रो भवति ॥ २६ ॥

## मिश्रे विलम्बात् पुत्रः ॥ २७ ॥

मिश्रे मिश्रग्रहे बहुपुत्रानपत्यकारके ग्रहे मिलिते सति विलम्बात् पुत्रः । परन्त्वत्र तयोर्बलविचारात् फलं चिन्त्यम् ॥ २७ ॥

## कुजशनिभ्यां दत्तपुत्रः ॥ २८ ॥

कुजशनिभ्यां सप्तमांशग्रहेभ्यो नवमे स्थिताभ्यां दत्तपुत्रो भवति ॥२८॥

## ओजे बहुपुत्रः ॥ २९ ॥

सप्तमांशग्रहेभ्यो नवमे विषमराशौ बहुपुत्रः स्यात् ॥ २९ ॥

## युग्मेऽल्पप्रजः ॥ ३० ॥

युग्मे समराशावल्पप्रजोऽल्पसन्ततिः स्यात् ॥ ३० ॥

## ग्रहक्रमात् कुक्षितदीशपञ्चमांशग्रहेभ्यश्चैवम् ॥ ३१ ॥

ग्रहक्रमाज्जन्मलग्नक्रमाद्यथा भावानां विचारः क्रियते तथैव कुक्षिश-

व्देन प्रकरणपठितोपपदस्य ग्रहणम् । तदीश उपपदेशः । ताभ्यां तत्पञ्चमांशग्रहेभ्यस्त्वेवं विचारः कार्यः । तथैतेषामंशेभ्यश्च विचारः कार्यः । अत्र येषां यत्र यत्र प्रयोजनं तेषां तत्र तत्रानुवृत्तिः कार्या ।

विशेषः प्राच्यैः ।

"कुम्भवृश्चिकवृषा हि ससिंहाः पञ्चमर्क्षपतिता इह लग्नात् ।
एकशो ददति चात्मसुतत्वं पुत्रशोकमथ ते ग्रहयुक्ताः" ॥ ३१ ॥

## भ्रातृभ्यां शनिराहुभ्यां भ्रातृनाशः ॥ ३२ ॥

उपपदोपपदेशाभ्यां तदंशाभ्यां च भ्रातृभ्यां तृतीयैकादशाभ्यां शनिराहुभ्यां भ्रातृनाशः स्यात् । तृतीये स्थिताभ्यां शनिराहुभ्यां कनिष्ठस्य । एकादशे स्थिताभ्यां शनिराहुभ्यां ज्येष्ठस्य नाशः । कर्मादिभ्रातुर्व्ययादिज्येष्ठस्येत्युक्तत्वात् ॥ ३२ ॥

## शुक्रेण व्यवहितगर्भनाशः ॥ ३३ ॥

उपपदोपपदेशाभ्यां तदंशाभ्यां तृतीयैकादशान्यतरस्थेन शुक्रेण यथाक्रमं व्यवहितभ्रातृनाशः ॥ ३३ ॥

## पितृभावे शुक्रदृष्टेऽपि ॥ ३४ ॥

लग्नादष्टमभावे शुक्रदृष्टे सति तदाऽपि व्यवहितगर्भनाशः स्यात् ॥३४॥

## कुजगुरुचन्द्रबुधैर्बहुभ्रातरः ॥ ३५ ॥

उपपदोपपदेशाभ्यां तदंशाभ्यां च तृतीयैकादशगैः कुजगुरुचन्द्रबुधैर्यथाक्रमं बहुभ्रातरो भवन्ति ॥ ३५ ॥

## शन्याराभ्यां दृष्टे यथास्वं भ्रातृनाशः ॥ ३६ ॥

शन्याराभ्यां दृष्टे उपपदोपपदेशाभ्यां तदंशाभ्यां च भ्रातृस्थाने यथास्वं यथाक्रमं भ्रातृनाशः । तृतीये दृष्टे कनिष्ठस्य । एकादशे दृष्टे ज्येष्ठस्य । यदा तु द्वौ भावौ ताभ्यां दृष्टौ द्वयोरपि नाशः स्यात् ॥ ३६ ॥

## शनिना स्वमात्रशेषश्च ॥ ३७ ॥

उपपदोपपदेशाभ्यां तदंशाभ्यां च भ्रातृस्थाने शनिना दृष्टे स्वमात्रशेषः स्यादन्ये नश्यन्तीति ॥ ३७ ॥

## केतौ भगिनीबाहुल्यम् ॥ ३८ ॥

उपपदोपपदेशाभ्यां तदंशाभ्यां च तृतीयैकादशयोः केतुयोगे सति यथाक्रमं भगिनीबाहुल्यं स्यात् ॥ ३८ ॥

## लाभेशाद्भाग्यभे राहौ दंष्ट्रावान् ॥ ३९ ॥

उपपदसप्तमेशाल्लग्नसप्तमेशाद्वा भाग्यभे द्वितीये राहौ सति दंष्ट्रावान् स्यात् ।

उक्तं च वृद्धेन ।

"सप्तमेशाद्द्वितीयस्थे राहौ मूकः खले स्थिते ।
अदन्तोऽधिकदन्तो वा दंष्ट्रायुक्तोऽथ वा भवेत् ॥
पवनव्याधिमान् केतौ यद्वा स्यादस्फुटोक्तिमान् ।
तत्र नानाग्रहैर्योगे मिश्रं फलमुदाहृतम्" ॥ ३९ ॥

## केतौ स्तब्धवाक् ॥ ४० ॥

सप्तमेशाद्द्वितीये केतौ सति स्तब्धवाक् भवति ॥ ४० ॥

## मन्दे कुरूपः ॥ ४१ ॥

उपपदसप्तमेशाद्द्वितीये शनौ कुरूपः स्यात् ॥ ४१ ॥

## स्वांशवशाद्गौरनीलपीतादिवर्णाः ॥ ४२ ॥

स्वांशवशादात्मकारकांशवशाच्छास्त्रान्तरप्रसिद्धाः पुरुषस्य गौरनीलादयो वर्णा ग्राह्याः । एवं तत्तत्कारकवशात् तेषां तेषां वर्णवाच्या इति ॥ ४२ ॥

## अमात्यानुचराद्देवताभक्तिः ॥ ४३ ॥

अमात्यानुचरादर्थादमात्यकारकस्य योऽनुचरो भ्रातृकारकः । तस्मादे-

वताभक्तिर्विचार्या । तस्य शुभत्वे शुभदेवतायां पापत्वे क्रूरदेवतायां भक्तिः। उच्चादिस्थे दृढा भक्तिर्नीचादिस्थेऽदृढेति ॥ ४३ ॥

## स्वांशे केवलपापसम्बन्धे परजातः ॥ ४४ ॥

आत्मकारकांशे केवलसम्बन्धे पापग्रहसम्बन्ध्यंशे पापयुक्ते पापदृष्टे तथा परजातः स्यात् ॥ ४४ ॥

## नात्र पापात् ॥ ४५ ॥

अत्रात्मकारकस्य पापादिदं फलं न भवति । अर्थात् कारकातिरिक्तपापसम्बन्धादिदं फलं ज्ञेयम् ॥ ४५ ॥

## शनिराहुभ्यां प्रसिद्धिः ॥ ४६ ॥

शनिराहुभ्यां कारकांशे षड्वर्गादिरूपेण गताभ्यां प्रसिद्धिः परजातप्रसिद्धिः स्यात् ॥ ४६ ॥

## गोपनमन्येभ्यः ॥ ४७ ॥

अन्येभ्यः पापेभ्यो गोपनं गुप्तं स्यात् ॥ ४७ ॥

## शुभवर्गेऽपवादमात्रम् ॥ ४८ ॥

कारकांशे शुभवर्गे पापदृग्योगे परजातत्वं न स्यात् किन्त्वपवादमात्रमेव स्यात् ॥ ४८ ॥

## द्विग्रहे कुलमुख्यः ॥ ४९ ॥

## इति जैमिनिसूत्रे प्रथमाध्यायस्य चतुर्थः पादः ।

आत्मकारकांशग्रहद्वयेन युक्ते जातकः कुलमुख्यो भवतीति ॥ ४९ ॥

इति सूत्रार्थप्रकाशिकायां प्रथमे चतुर्थः पादः ।

समाप्तश्चायमध्यायः ।

---

अथायुर्दायाध्यायो व्याख्यायते ।

## आयुः पितृदिनेशाभ्याम् ॥ १ ॥

पितृदिनेशाभ्यां लग्नाष्टमेशाभ्यामायुर्विचारः कार्यः । वक्ष्यमाणप्रकारेणेति शेषः ॥ १ ॥

अथ दीर्घायुर्योगमाह ।

## प्रथमयोरुत्तरयोर्वा दीर्घम् ॥ २ ॥

प्रथमयोश्चरयोर्मध्ये स्थितयोर्लग्नेशाष्टमेशयोर्दीर्घम् । तथोत्तरयोः स्थिरद्विस्वभावयोर्मध्ये स्थितयोर्लग्नेशाष्टमेशयोर्दीर्घं स्यात् । अत्रैकस्मिन्नेव चरराशौ द्वयोः स्थितया एकस्यैव वा तदुभयस्वामित्वे न योगहानिरिति ॥ २ ॥

अथ मध्यायुर्योगमाह ।

## प्रथमद्वितीययोरन्त्ययोर्वा मध्यम् ॥ ३ ॥

प्रथमद्वितीययोश्चरद्विस्वभावयोः स्थितयोस्तयोर्लग्नेशाष्टमेशयोर्मध्यम् । तथाऽन्त्ययोर्द्विस्वभावयोर्मध्ये स्थितयोस्तयोर्मध्यम् । मध्यायुः स्यादित्यर्थः ॥ ३ ॥

अथाल्पायुर्योगमाह ।

## मध्ययोराद्यन्तयोर्वा हीनम् ॥ ४ ॥

मध्ययोः स्थिरयोर्मध्ये स्थितयोस्तयोर्हीनम् । वा आद्यन्तयोश्चरद्विस्वभावयोर्मध्ये स्थितयोस्तयोर्हीनं हीनायुः स्यात् ॥ ४ ॥

## एवं मन्दचन्द्राभ्याम् ॥ ५ ॥

एवमनयैव रीत्याऽर्थात् यथा लग्नेशाष्टमेशाभ्यामायुर्दायो विचारितस्तथैव मन्दचन्द्राभ्यां लग्नचन्द्राभ्यां शनिचन्द्राभ्यां वा विचारः कार्यः । कुत्र मन्दशब्देन लग्नं कुत्र मन्दशब्देन शनिरित्यग्रे वक्ष्यति ॥ ५ ॥

## पितृकालतश्च ॥ ६ ॥

एवमेव पूर्वोक्तरीत्या पितृकालतो जन्मलग्नहोरालग्नयोरपि विचारः कार्यः ॥ ६ ॥

## संवादात् प्रामाण्यम् ॥ ७ ॥

अत्र त्रिविधेष्वायुर्दायेषु प्रकारत्रयेणैकाकारायुःप्रदत्वे निर्विवाद एव । तत्र भिन्नत्वे प्रकारद्वयेन यदायुरायाति तदेव ग्राह्यम् । अथ वा सर्वेषां योगस्त्रिभक्त इत्येव संवादो ग्राह्यः ॥ ७ ॥

सर्वत्र विसंवादे निर्णयमाह ।

## विसंवादे पितृकालतः ॥ ८ ॥

विसंवादे प्रकारत्रयेणापि भिन्नभिन्नरूपेणागते आयुर्दायखण्डे लग्नहोरालग्नाभ्यां यदागतं तदेव ग्राह्यम् ॥ ८ ॥

## पितृलाभगे चन्द्रे चन्द्रमन्दाभ्याम् ॥ ९ ॥

एवं मन्दचन्द्राभ्यामिति सूत्रे कुत्र मन्दशब्देन शनेर्ग्रहणं कुत्र लग्नस्य ग्रहणमिति सन्देहं निराकुर्वन्नाह । पितृलाभगे लग्नसप्तमगे चन्द्रे तदा लग्नचन्द्राभ्यामन्यथा शनिचन्द्राभ्यामायुर्दायानयनं कार्यम् ।

अत्र वृद्धवाक्यम् ।

"लग्नेशरन्ध्रपत्योश्च लग्नेन्द्वोर्लग्नहोरयोः ।
सूत्राण्येवं प्रयुञ्जीयात् संवादादायुषां त्रये" ॥

लग्नेन्द्वोरित्युपलक्षणं शनिचन्द्रयोरपि ग्रहणम् ।

"चरे चरस्थिरद्वन्द्वाः स्थिरे द्वन्द्वचरस्थिराः ।
द्वन्द्वे स्थिरोभयचरा दीर्घमध्याल्पकायुषः" ॥

अल्पायुरादिकं वृद्धैरुक्तम् ।

"द्वात्रिंशात् पूर्वमल्पायुर्मध्यमायुस्ततो भवेत् ।
चतुःषष्ट्याः पुरस्तात् तु ततो दीर्घमुदाहृतम् ॥

षट्त्रिंशात् पूर्वमल्पायुर्मध्यमायुस्ततो भवेत् ।
द्विसप्तत्या पुरस्तात् तु तदा दीर्घमुदाहृतम् ॥
चत्वारिंशात् पुरस्तात् तु हीनायुः परिकीर्त्तितम् ।
अशीत्यब्दात् पुरस्तात् तु मध्यायुः परिकीर्त्तितम् ॥
ततो दीर्घं भवत्येव विंशोत्तरशतात्मकम्" ।

"रसाङ्क-९६गजाभ्रेन्दुभिः१०८शून्यमासै-१२०
स्त्रिधा दीर्घमायुः कलौ संप्रदिष्टम् ।
चतुःषष्टि-६४बाहुद्रय-७२शीति-८०प्रमाणै-
र्मतं मध्यमायुर्नृणां वत्सरैः स्यात् ॥
तथा द्वित्रि-३२षड्वह्नि-३६शून्याब्धि-४०वर्षै-
र्भवेदल्पमायुर्नराणां युगान्ते" ।

"लग्नेशादष्टमेशाच्च योगैकः कथितो द्विज ।
होरालग्नाभ्यां द्वितीयं योगयोगं विचिन्तयेत् ॥
तृतीयं शनिचन्द्राभ्यां चिन्तनीयं सदा द्विज ।
लग्नेन्दुमंदने वाऽपि चिन्तयेल्लग्नचन्द्रतः" ॥

अत्र द्वात्रिंशत् षट्त्रिंशच्चत्वारिंशदब्दमितखण्डेषु किं ग्राह्यम् । तत्रोच्यते । योगत्रयेणापि दीर्घखण्डस्य प्राप्तौ चत्वारिंशदब्दरूपं खण्डं ग्राह्यम् । योगद्वयेन दीर्घायुषि प्राप्ते षट्त्रिंशदब्दरूपं खण्डं ग्राह्यम् । योगैकेन द्वात्रिंशदब्दरूपं खण्डं ग्राह्यम् । अस्यैव विपरीतमल्पे । अर्थात् योगत्रयेणाल्पायुर्योगे द्वात्रिंशत् । योगद्वयेन षट्त्रिंशत् । योगैकेन चत्वारिंशद्वर्षात्मकं खण्डं ग्राह्यम् । मध्यमायुषि लग्नेशाष्टमेशाभ्यामायुरानयने चत्वारिंशत् । लग्नचन्द्राभ्यां वा शनिचन्द्राभ्यां षट्त्रिंशत् । लग्नहोरालग्नाभ्यां द्वात्रिंशदब्दरूपं खण्डं प्रकल्प्यानुपातेनायुर्दायानयनं कार्यम् । तत्रानुपातो यथा । यदि त्रिंशदंशैर्द्वात्रिंशदब्दरूपं षट्त्रिंशदब्दरूपं चत्वारिंशदब्दरूपं वा खण्डं तर्हि लग्नेशादेवंसमानराशेर्भुक्तांशैः किमिति रीत्या फलमानीय लब्धं प्राप्तखण्डे

शोध्यम् । यद्यवशिष्टं तदल्पायु:सम्बन्धि चेत् तदा तदेव स्पष्टायु: । मध्यायुष: सम्बन्धि चेत् तदा प्राप्तखण्डानुसारेण द्वात्रिंशत्षट्त्रिंशच्चत्वारिंशन्मध्ये वा योज्यम् । यदि दीर्घायुष: सम्बन्धि तदा चतु:षष्टिद्विसप्तत्यशीतिमध्ये वा योजनीयम् । एवं पृथक् लग्नेशादिकानां फलमानीय तद्योगं कृत्वा योगकारकसंख्यया विभज्य स्पष्टायुर्मानं विज्ञेयम् । इति प्रस्तारसूत्रागतायुर्विवेक: ।

एवमेवानुपातविधिर्वृद्धेनाप्यभिहित: ।

"पूर्णमादौ हानिरन्तेऽनुपातो मध्यतो भवेत् ।
राशिद्वयस्य योगार्धं वर्षाणां स्पष्टमुच्यते" ॥

अस्यार्थ: ।आदौ राश्यादौ स्थिते ग्रहे तत्खण्डस्य पूर्णत्वम् । अन्ते राश्यन्ते हानिस्तत्खण्डस्य नाश: । एवमनया रीत्या योगकारकयो: पृथक् पृथक् स्पष्टतां विधाय तयो राश्योर्वर्षाणां योगार्धं स्पष्टमुच्यत इति ॥ ९ ॥

अथ कक्ष्याह्रासयोगं दर्शयति ।

## शनौ योगहेतौ कक्ष्याह्रास: ॥ १० ॥

यद्यत्र शनिर्योगकर्त्ता चेत् तदा कक्ष्याह्रास: स्यात् । अत्र श्रीमता नीलकण्ठेनैवं प्रदर्शितम् । "दीर्घं चेन्मध्यं मध्यं चेदल्पं मल्पं चेन्न किञ्चित्"-इति ॥ १० ॥

मतान्तरमाह ।

## विपरीतमित्यन्ये ॥ ११ ॥

अन्ये आचार्या एवं प्रोचु: शनिर्योगकर्त्ता चेत् तदा विपरीतं कक्ष्यावृद्धिरित्यर्थ: । यत् तु श्रीमता नीलकण्ठेन विपरीतमिति शब्दस्य न कक्ष्याह्रासो न वृद्धि: किन्तु यथास्थित एवेति यदुक्तं तदसङ्गतम् । विपरीतमिति शब्दस्य यथास्थित इत्यर्थासंभवात् ॥ ११ ॥

अथ स्वमतमाह सूत्राभ्याम् ।

## न स्वर्क्षतुङ्गगे सौरे ॥ १२ ॥ केवलपापदृग्योगिनि च ॥ १३ ॥

स्वक्षंतुङ्गगे सौरे कक्ष्याह्रासो न स्यात् । अर्थान्नीचराशौ शत्रुराशौ वा स्थिते शनौ कक्ष्याह्रासो नान्यत्र । अत्रापि विशेषमाह । केवलपापदृग्योगिनि च शनौ नीचादिराशौ स्थितेऽपि न कक्ष्याह्रास इत्यर्थः॥ १२-१३ ॥

अथ कक्ष्यावृद्धियोगं दर्शयति ।

पितृलाभगे गुरौ केवलशुभदृग्योगिनि च कक्ष्यावृद्धिः ॥ १४ ॥

गुरौ पितृलाभगे लग्नसप्तमगे सति कक्ष्यावृद्धिर्भवति । तथा केवलशुभदृग्योगिनि च गुरौ कक्ष्यावृद्धिर्भवति । अत्रापि न स्वक्षंतुङ्गगे सौरे इति सूत्रपर्यालोचनया स्वक्षंतुङ्गगे एव गुरौ कक्ष्यावृद्धिर्नान्यत्रेति फलितार्थो निःसरति । वृद्धिप्रकारस्तु स्वाम्यादिभिरेव प्रदर्शितः । अनायुषोऽल्पायुरल्पायुषो मध्यमायुर्मध्यमायुषो दीर्घायुर्दीर्घायुषः पूर्णायुरिति । परमत्र ग्रन्थे अनायुषो योगादर्शनात् पूर्णायुषश्चापि योगादर्शनात् इति कथनं न समीचीनम् । तत्र किं ग्राह्यमित्युच्यते । अत्र कक्ष्या त्रिविधा द्वात्रिंशदब्दरूपा प्रथमा । षट्त्रिंशदब्दरूपा द्वितीया । चत्वारिंशदब्दरूपा तृतीया । तत्र शनौ योगकर्त्तरि तृतीयकक्ष्याप्राप्तौ द्वितीया ग्राह्या । द्वितीयप्राप्तौ प्रथमा ग्राह्या । प्रथमायाः प्राप्तौ तत्पूर्वखण्डस्याभावाच्चरदशायां शनिस्थितराशेर्या दशा तदर्धं हीनं कार्यम् । तत्रापि कक्ष्यादिराश्यन्तवशादनुपातागतमेव फलं ज्ञेयम् । एवमेव कक्ष्यावृद्धावपि । प्रथमकक्ष्याप्राप्तौ द्वितीयकक्ष्याग्रहणम् । द्वितीयायाः प्राप्तौ तृतीयकक्ष्याया ग्रहणम् । तृतीयायाः प्राप्तौ तत्परखण्डाभावात् तदायुषि गुरुर्यस्मिन् राशौ स्थितस्तद्राशेर्या चरदशा तदर्धं योजनीयम् । अत्राप्यनुपातः पूर्ववत् ।

अत्र विशेषस्तु वृद्धैरुक्तः ।

“एकोऽष्टमेशः स्वोच्चस्थः पर्यायार्धं प्रयच्छति ।
नीचस्थो नाशयेत् पर्यायार्धमायुषि निश्चिते ॥

नीचरन्ध्रेशसंयुक्ताः पर्यायार्धं पृथक् पृथक् ।
ग्रहाः विनाशयन्त्येव निर्णीते परमायुषि ॥
उच्चरन्ध्रेशसंयुक्तग्रहैः प्रत्येकमुन्नयेत् ।
एकैकमर्धपर्यायं परमायुषि निश्चिते" ॥ १४ ॥

अथायुःप्रमाणसिद्धं मारकयोगमाह ।

**मलिने द्वारबाह्ये नवांशे निधनं द्वारद्वारेशयोश्च मालिन्ये ॥ १५ ॥**

द्वारबाह्ये मलिने नवांशे तद्द्वारराशेर्नवांशदशायां निधनं भवति । तथा द्वारद्वारेशयोश्चापि मालिन्ये तद्द्वारदशायां निधनं भवति । मालिन्यं पापयोगपापदृष्ट्यादिकम् । दशाश्रितराशेर्द्वारसंज्ञा । दशारम्भराशेर्यावत्संख्यो द्वारराशिस्तस्मात् तावत्संख्यो बाह्यराशिरित्युच्यते । नवांशदशा तु विषमे तदादिर्नवांशा इत्यादिना वक्ष्यति ॥ १५ ॥

**शुभदृग्योगान्न ॥ १६ ॥**

अत्रापवादमाह । द्वारबाह्ययोरुपरि शुभदृग्योगात् तद्द्वारराशिदशायां न निधनं स्यात् ॥ १६ ॥

अत्र विशेषमाह ।

**रोगेशे तुङ्गे नवांशवृद्धिः ॥ १७ ॥**

रोगेशे जन्मलग्नादष्टमेशे तुङ्गे स्वोच्चगे सति पूर्वनिश्चितराशिनवांशदशायां निधनं न स्यात् । किन्तु नवांशवृद्धिर्नवाब्दवृद्धिर्भवतीत्यर्थः । अर्थात् तदग्रिमराशिदशायां निधनं स्यात् ॥ १७ ॥

**तत्रापि पदेशदशान्ते पदनवांशदशायां पितृदिनेशत्रिकोणे वा ॥ १८ ॥**

मालिन्यविशिष्टमारकराशिदशायां वा तदग्रिमराशिदशायां निधनं

कदा स्यादित्याशङ्कायामाह तत्रापि मालिन्ययुक्तराशिदशायां तदग्रिमराशिदशायां वा पदस्य लग्नपदस्य यः स्वामी तदाश्रयीभूतराशिदशान्ते वा पदराशिनवांशदशायामथ वा लग्नाष्टमेशाभ्यां त्रिकोणराशिदशायां निधनं स्यात् । अत्रत्यनवांशशब्दस्तु अन्तर्दशाया अपि वाचकः । अथ वा वृद्धिपक्षेऽपि पदेशदशान्ते पदनवांशदशायां पितृदिनेशत्रिकोणराशिदशायां वाऽन्तर्दशायां निधनं स्यादित्यर्थः ॥ १८ ॥

अथ प्रकारान्तरेण दीर्घादियोगमाह ।

## पितृलाभरोगेशप्राणिनि कण्टकादिस्थे स्वतश्चैवं त्रिधा ॥ १९ ॥

लग्नात् सप्तमाद्य यावष्टमेशो तयोर्यो बली तस्मिन् केन्द्रादिस्थे केन्द्रपणफरापोक्लिमस्थे त्रिधा योगो भवति । केन्द्रे दीर्घम् । पणफरे मध्यम् । आपोक्लिमेऽल्पम् । एवमेवात्मकारकाद्यापि योगत्रयं वेदितव्यम् । अर्थादात्मकारकात् तत्सप्तमाद्य यौ रोगेशौ तयोर्मध्ये यो बली स च यदि कारकात् केन्द्रादिगतस्तदा त्रिधा योगो भवति । केन्द्रे दीर्घम् । पणफरे मध्यम् । आपोक्लिमेऽल्पम् । अत्र पितृलाभरोगेश इत्युक्त्या लग्ने विषमे क्रमात् समे व्युत्क्रमादष्टमेशो ग्राह्य इति सूचितं भवति ॥ १९ ॥

अत्रापवादमाह ।

## योगात् समे स्वस्मिन् विपरीतम् ॥ २० ॥

योगाज्जन्मलग्नात् समे नवमे स्वस्मिन्नात्मकारके विपरीतं दीर्घं चेदल्पं मध्यं चेन्मध्यं हीनं चेद्दीर्घमित्यर्थः । अर्थात् केन्द्रे हीनम् । पणफरे मध्यम् । आपोक्लिमे दीर्घमिति । अत्रापि लग्ने विषमे क्रमतः सम उत्क्रमतो नवमं ग्राह्यम् ॥ २० ॥

## राशितः प्राणः ॥ २१ ॥

अस्मिन् प्रकरणे राशितो बलं ग्राह्यम् । कारकयोगः प्रथमो भानामि-

त्यादिकं वक्ष्यमाणम् । "अग्रहात् सग्रहो ज्यायान्"-इत्यादिकं च । अत्रांशाधिक्यबलं न ग्राह्यम् ॥ २१ ॥

अत्र विशेषमाह ।

**रोगेशयोः स्वत ऐक्ये योगे वा मध्यम् ॥ २२ ॥**

रोगेशयोरष्टमेशयोः स्वतः कारकेण सह ऐक्ये योगे वा सति मध्यायुरर्थात् पितृलाभेत्यादिना सिद्धं दीर्घायुश्चेत् तदाऽपि मध्यायुर्मध्यायुश्चेत् तदा तु निर्विवाद एव । अत्रात्मकारकाष्टमेशेनात्मकारकस्यैक्ये योगे वा दीर्घस्यैव मध्यमत्वम् । लग्नाष्टमेशेन कारकैक्ये योगे वा हीनस्यापि मध्यत्वं वेदितव्यम् । यत् तु सुबोधिनीकारेण "जातकशास्त्रान्तरे लग्नस्य अस्मिन् ग्रन्थे कारकस्य प्राधान्यादष्टमेशयोगेनायुषो ह्रास एवेति विभावनीयम्"-इत्युक्तं तदसङ्गतम् । अष्टमेशयोगेनापि रोगेशे तुङ्गे नवांशवृद्धिः ।

तथा ।

"एकोऽष्टमेशः स्वोच्चस्थः पर्यायार्धं प्रयच्छति" ।

इत्यादावायुषो वृद्धिसद्भावात् ॥ २२ ॥

अथात्र दीर्घादियोगेषु कक्ष्याह्रासयोगमाह ।

**पितृलाभयोः पापमध्यत्वे कोणे पापयोगे वा कक्ष्याह्रासः ॥ २३ ॥**

पितृलाभयोर्लग्नसप्तमयोः पापमध्यत्वे प्राप्ते वा कोणे नवपञ्चमे पापयोगे सति काक्ष्याह्रासो भवति अर्थाद्यत्र लग्नाष्टमेशवशाच्चत्वारिंशद्वर्षरूपखण्डप्राप्तिस्तत्र षट्त्रिंशद्वर्षरूपखण्डप्राप्तिर्भवति । तत्र यदि लग्नाष्टमेशवशादायुर्दायानयनं तत्र लग्नस्य पापमध्यत्वम् । लग्नात् त्रिकोणे पापयोगश्चान्वेष्यः । यत्र सप्तमाष्टमेशवशाद्योगप्राप्तिस्तत्र सप्तमस्य पापमध्यत्वम् । सप्तमात् त्रिकोणे पापयोगो विचार्यः । एवमेव कारकादपि योगविभागो वेदितव्यः ॥ २३ ॥

**स्वस्मिन्नप्येवम् ॥ २४ ॥**

स्वस्मिन् कारकेऽप्येवमेव भवति । कारकराशेस्तत्सप्तमराशेश्च पाप-

मध्यत्वे प्रथमो योगः । तयोस्त्रिकोणे पापे सति द्वितीयो योग इति ॥ २४ ॥

अथान्ययोगं दर्शयति ।

**तस्मिन् पापे नीचेऽतुङ्गेऽशुभसंयुक्ते च ॥ २५ ॥**

तस्मिन्नात्मकारके पापे नीचराशौ स्थिते कक्ष्याह्रासः । अतुङ्गेऽनुच्चराशौ स्थिते पापयुक्ते च कक्ष्याह्रासो भवतीति ॥ २५ ॥

सर्वत्रापवादमाह ।

**अन्यदन्यथा ॥ २६ ॥**

लग्नसप्तमयोः कारकसप्तमयोर्वा शुभमध्यत्वे वा तेषां त्रिकोणे शुभयोगे कक्ष्यावृद्धिर्भवति । अत्र कक्ष्यावृद्धिशब्देनैकराशिवृद्धिरेव ग्राह्या अष्टमेशवशादायुर्दायानयने चत्वारिंशद्वर्षरूपखण्डस्य ग्रहणात् तत्पराधिकखण्डस्याप्राप्तित्वात् कक्ष्यावृद्धेरसंभवात्। इत्याशयेनैव पूर्णेन्दुशुक्रयोरेकराशिवृद्धिरिति महर्षिणाऽपि प्रोक्तम् ॥ २६ ॥

**गुरौ च ॥ २७ ॥**

गुरावपि कक्ष्याह्रासवृद्धियोगं दर्शयति । गुरोः पापमध्यत्वे वा गुरोस्त्रिकोणे पापयोगे सति कक्ष्याह्रासः । गुरोः शुभमध्यत्वे तथा तस्मात् त्रिकोणे शुभसंयोगे कक्ष्यावृद्धिः । तथा गुरौ नीचे पापसंयुक्ते च कक्ष्याह्रास इत्यर्थः ॥ २७ ॥

अथात्र विशेषमाह ।

**पूर्णेन्दुशुक्रयोरेकराशिवृद्धिः ॥ २८ ॥**

शुभग्रहेण मध्यत्वे प्राप्ते पूर्णेन्दुशुक्रयोर्योगे न कक्ष्यावृद्धिः किन्त्वेकराशिवृद्धिरेव ॥ २८ ॥

कक्ष्याह्रासयोगे विशेषमाह ।

**शनौ विपरीतम् ॥ २९ ॥**

कक्ष्याह्रासयोगे प्रसक्ते उक्तस्थाने शनौ सति न कक्ष्याह्रासः । किन्त्वे-

कराशिह्रास एव । पूर्वसूत्रे चन्द्रशुक्रयोः प्राधान्याद्ग्रहान्तरेष्वपि योगकारकेषु कक्ष्यावृद्धिस्थाने एकराशिवृद्धिरेव । इत्याशयेनैव सुबोधिन्यामपि श्रीमता नीलकण्ठेनोक्तम् "अत्र चन्द्रशुक्रशनीनां प्राधान्येन योगकर्तृत्वेन ग्रहान्तरेषु योगकारकेष्वपि एकराशेर्वृद्धिह्रासो वा स्यान्न तु कक्ष्याया इत्यर्थः" इति ।

अथ प्रकारान्तरेणायुर्दायनिश्चयमाहुर्वृद्धाः ।

"धर्ममोक्षे चिरायुष्यं धर्मे कामे च मध्यमम् ।
धर्मे धने च स्वल्पायुर्धर्मे धर्मे गतायुषः" ॥

अस्यार्थः । "आयुः पितृदिनेशाभ्याम्"-इत्यत्र लग्नेशाष्टमेशौ यदि एकादशपञ्चमयोश्चेत् तदा दीर्घायुः । एकादशतृतीययोश्चेत् तदा मध्यायुः । एकादशद्वितीययोरेकादशनवमयोर्वा चेदल्पायुः । द्वावपि एकादशे भवतस्तदा गतायुरित्यर्थः ।

अन्यच्च ।

"लग्नलग्नेशतद्राशिनाथभानां त्रिकोणके ।
अल्पमध्यचिरायुष्यं रूपवर्षप्रमाणतः" ॥

अस्यार्थः । योऽयमष्टमेशादिरिह सूत्रेषु निर्णयकारकः समाश्रितः स चेल्लग्नत्रिकोणे तर्हि हीनायुष्यं लग्नेशत्रिकोणे चेन्मध्यायुष्यं लग्नेशाश्रितराशिनाथत्रिकोणे चेद्दीर्घायुष्यमिति विभागः । तत्रापि यथोपदिष्टं क्रमव्युत्क्रमं ज्ञेयम् । रूपवर्षप्रमाणत इति । लग्ने त्रयोदश वर्षाणि चत्वारो मासाः । पञ्चमे चेत् तदा षड्विंशतिर्वर्षाण्यष्टौ मासाः । नवमे चेत् तदा चत्वारिंशद्वर्षाणि । लग्नेशाश्रितराशौ चेत् त्रिपञ्चाशद्वर्षाणि चत्वारो मासाः । लग्नेशात् पञ्चमे षट्षष्टिर्वर्षाणि अष्टौ मासाः । लग्नेशान्नवमे चेत् तदाऽशीतिर्वर्षाणि । लग्नेशाश्रितराशिनाथस्थाने त्रिनवतिर्वर्षाणि चत्वारो मासाः । तत्पञ्चमे षडुत्तरशतवर्षाण्यष्टौ मासाः । तन्नवमे पूर्णायुरिति ।

अन्यश्च विशेषो वृद्धैरुक्तः ।

"तुलामेषविलग्ने तु प्रायः शुक्रो भवेद्बली ।

रविः कुजः शनी राहुर्मरणे बलिनः क्रमात् ॥
विरोधो दुर्बलं हित्वा ग्राहयेद्दुर्बलं सुधीः ।
केतुश्च शनिवज्ज्ञेयो नाथैरेभिश्च निर्दिशेत् ॥
शनिना राहुणा वाऽपि युक्ते सौम्यैरवीक्षिते ।
पर्यायमेकं तन्मध्ये चैकराशौ मृतिं वदेत् ॥
तयोस्तु शुभयोगे तु तद्राशौ मृतिमादिशेत् ।
भोगराशौ दुर्बले वा प्रबले वा ग्रहे स्थिते ॥
तथाऽपि निर्दिशेत् काले मरणं नात्र संशयः ।
केतौ श्रीमद्दशानाथे नाथे वा शुभवीक्षिते ॥
केतोर्दशान्ते मृत्युः स्यात् शुभदृष्टे न किञ्चन"-इति ॥२९॥

## स्थिरदशायां यथाखण्डं निधनम् ॥ ३० ॥

स्थिरदशायां "शशिनन्दपावकाः"-इत्यादिना वक्ष्यमाणायां यथाखण्डं खण्डमनतिक्रम्य इति यथाखण्डं निधनंस्यात् अर्थात् पूर्णायुषस्त्रिविभागमल्पमध्यदीर्घरूपं कार्यम् । हीनायुश्चेत् प्रथमखण्डे मध्यायुश्चेद्द्वितीयखण्डे पूर्णायुश्चेत् तृतीयखण्डे निधनं स्यात् । लग्नात् पञ्चमान्तं प्रथमखण्डम् । पञ्चमान्नवमान्तं द्वितीयखण्डम् । नवमाल्लग्नान्तं तृतीयखण्डमिति ॥ ३० ॥

## तत्रर्क्षविशेषः ॥ ३१ ॥

तत्र यथाखण्डेऽपि कदा निधनं स्यादित्याशङ्क्याह तत्र राशिविशेषो वक्ष्यमाणरूपः स्यात् ॥ ३१ ॥

अथ राशिविशेषलक्षणं दर्शयति ।

## पापमध्ये पापकोणे रिपुरोगयोः पापे वा ॥ ३२ ॥

पापमध्ये यो राशिस्तद्राशिदशायाम् । पापकोणे यो राशिस्तस्य दशायाम् । अथ वा यस्माद्राशे रिपुरोगयोर्द्वादशाष्टमयोः पापे पापग्रहे तद्राशिदशायां वा निधनं भवति ।

तदुक्तं वृद्धैः ।

"शुभमध्ये मृतिर्नैव पापमध्ये मृतिर्भवेत्"-इति ॥ ३२ ॥

पुनरपि राशिविशेषमाह ।

## तदीशयोः केवलक्षीणेन्दुशुक्रदृष्टौ वा ॥ ३३ ॥

तदीशयोर्मलिने द्वारबाह्येनयांशे निधनमित्युक्तत्वाद्द्वारबाह्येशयोर्ग्रहा-हान्तरदृष्टिरहितयोः केवलक्षीणेन्दुशुक्रदृष्टयोः सतोस्तद्द्वारराशिदशायां निधनं स्यात् । अथ वा तदशीयोर्द्विदशाष्टमेशयोः पूर्वलक्षणाक्रान्तयोः सतो-र्द्विदशाष्टमराशिदशायां निधनं भवतीत्यर्थः ॥ ३३ ॥

## तत्राप्याद्यर्क्षारिनाथदृश्यनवभागाद्वा ॥ ३४ ॥

तत्राप्यर्थान्मारकलक्षणाक्रान्तराशेर्बहुवर्षव्यापिन्यां दशायामपि प्रथ-मदशाप्रदराशेर्योऽष्टमेशस्तद्दृश्यराशिनवभागान्मरणमष्टमेशेन दृष्टो यो रा-शिस्तदन्तर्दशायामित्यर्थः । अथ वा जन्मलग्नादष्टमषष्ठाधीशाभ्यां दृष्टो यो राशिस्तदन्तर्दशायां निधनं स्यात् ॥ ३४ ॥

अथ निधनाश्रयीभूतराशिलक्षणं प्रकारान्तरेण दर्शयितुं रुद्रग्रहमाह ।

## पितृलाभभावेशप्राणी रुद्रः ॥ ३५ ॥

लग्नसप्तमयोः पूर्वप्रवृत्तक्रमोत्क्रमगणनया यावष्टमेशौ तयोर्मध्ये यो बली स रुद्रसंज्ञको ग्रहः ॥ ३५ ॥

## अप्राण्यपि पापदृष्टः ॥ ३६ ॥

लग्नसप्तमयोः पूर्वरीत्या यावष्टमेशौ तत्र यो निर्बलः स पापदृष्टश्चेत् तदा सोऽपि रुद्रः स्यात् ॥ ३६ ॥

अथास्य प्राणिरुद्रस्य प्रयोजनमाह ।

## प्राणिनि शुभदृष्टे रुद्रशूलान्तमायुः ॥ ३७ ॥

प्राणिनि बलिनि रुद्रग्रहे शुभदृष्टे सति रुद्रशूलान्तमल्पमध्यदीर्घायु-र्भेदेन प्रथमशूलान्तं द्वितीयशूलान्तं तृतीयशूलान्तं चायुःसमाप्तिर्भवति ।

लग्नात् पञ्चमपर्यन्तं प्रथमशूलः । ञ्चमान्नवमपर्यन्तं द्वितीयशूलः । नवमा-ल्लग्नपर्यन्तं तृतीयशूल इत्यर्थः ॥ ३७ ॥

## तत्रापि शुभयोगे ॥ ३८ ॥

तत्रापि अप्राणिनि रुद्रेऽपि शुभयोगे सति अप्राणिरुद्रशूलदशान्तं मरणं भवतीत्यर्थः । तत्रापि प्राणिरुद्रेऽपि-पदं निश्चयात्मकम् । "शुभयोगे सति निश्चयेन रुद्रशूलान्तमायुर्भवति" इति काशिकाकारेणोक्तम्। अयमेवार्थः समीचीन इति प्रतिभाति । यतः पूर्वं शुभदृष्ट्या एव योगसिद्धिस्तेनैव शुभयोगेन तस्य निश्चयत्वं प्रतिपद्यते ॥ ३८ ॥

## ऽयर्कपापयोगेन ॥ ३९ ॥

रविरहितपापयोगे सति नेदं फलं भवति । अर्थाद्रवियोगेन नास्य फलस्य भङ्ग इत्यर्थः । अत्र प्रकरणे रविः शुभग्रह एव न पापग्रह इति॥३९॥

अथ रुद्रद्वयस्य फलविशेषं दर्शयति ।

## मन्दारेन्दुदृष्टे शुभयोगाभावे पापयोगेऽपि वा शुभदृष्टौ वा परतः ॥ ४० ॥

मन्दारेन्दुदृष्टे शनिभौमचन्द्रदृष्टे रुद्रद्वये शुभयोगाभावे एको योगः । मन्दारेन्दुदृष्टे रुद्रद्वये पापयोगे द्वितीयः । मन्दारेन्दुदृष्टे रुद्रद्वये शुभदृष्टौ वा सत्यां परतो रुद्रशूलात् परत आयुःसमाप्तिर्भवतीति । अत्र प्रथमयोगे शुभयोगाभावे इत्युक्तम् । द्वितीययोगे पापयोगे इत्युक्तम् । तेन प्रथमयोगे शुभपापरहित इति वेदितव्यम् ।

अस्मिन् प्रकरणे शुभपापा वृद्धैरुक्ताः ।

"अर्कारमन्दफणिनः क्रमात् क्रूरा यथाश्रयम् ।
चन्द्रोऽपि क्रूर एवात्र क चिदङ्गारकाश्रये ॥
गुरुध्वजकविज्ञाः स्युर्यथापूर्वं शुभग्रहाः"-इति ।

अयमर्थः । अर्काद्या यथोत्तरं यथाश्रयं क्रूराः । अर्थादर्काद्याः क्रूराः

परन्तु पापराशिगता अतीव पापाः । शुभराशिगता मध्यफलाः । एवमेव गुर्वादयः शुभग्रहाः । तेऽपि शुभराशिगता अतीव शुभफलदाः । पापराशिगता मध्यफलाः । अत्रार्कः सामान्यपापः । ततः पापत्वेन वली भौमः । ततः शनिः । ततो राहुरिति । गुर्वादयस्तु यथापूर्वं शुभग्रहाः । अर्थाद्बुधः सामान्यशुभः । ततः शुभफलदः शुक्रः । ततः केतुः । ततो गुरुरिति ।

अयमेवाशयो वृद्धैरप्युक्तः ।

"प्रत्येकं शुभराशिस्थ उच्चस्थो वा बुधः शुभः ।
गुरुशुक्रौ च सौम्यस्थौ ततोऽन्यत्राशुभाः स्मृताः" ॥ ४० ॥

यदि शूले मृतिस्तर्हि कस्मिञ्छूल इत्यपेक्षायामाह ।

## शूले चेत् तदन्तशूले ॥ ४१ ॥

यदि शूले मृतिस्तर्हि तदन्तशूले मृतिः स्यात् । अर्थाद्यदि रुद्रशूले आयुःसमाप्तिस्तर्हि शूलमहादशायां द्वादशराशीनामन्तर्दशासु या रुद्रशूलान्तर्दशा तस्यां निधनमित्यर्थः ।

एतत्सूत्राणामाशयो वृद्धैरुक्तः ।

"पापमात्रस्य शूलत्वे प्रथमर्क्षे मृतिर्भवेत् ।
मिश्रे मध्यमशूलर्क्षे शुभमात्रेऽन्त्यभे मृतिः" ॥

अस्यार्थः । यदि द्वौ रुद्रौ पापौ तदा प्रथमशूले मृतिः । यदि मिश्रौ तदा द्वितीयशूले मृतिः । यदि द्वौ रुद्रौ शुभौ तदाऽन्त्यशूले मृतिः स्यादित्यर्थः । पापमात्रस्य शूलत्व इति वृद्धवाक्यसमालोचनया सुबोधिन्यां "प्राणिनि शुभदृष्टे रुद्रशूलान्तमायुः"-इति सूत्रटीकायां "प्रथमपञ्चमनवमदशान्तमायुर्भवति"-इति यदुक्तं तदसङ्गतमेव प्रतिभातीति ।

अन्यश्च वृद्धोक्तो विशेषः ।

"क्रूराश्रयेषु क्षेत्रेषु शुभानामाश्रयेषु च ।
निर्माणमीरितं तत् तु शूलर्क्षेष्वेव निर्दिशेत्"-इति ॥ ४१ ॥

अथापरं विशेषमाह ।

**रुद्राश्रयेऽपि प्रायेण ॥ ४२ ॥**

प्रायेण रुद्राश्रितराशावपि मरणं स्यात् । प्रायःशब्दाद्रुद्राश्रयात् पूर्वं परतोऽपि भवतीति सूचितम् ॥ ४२ ॥

**क्रिये पितरि विशेषेण ॥ ४३ ॥**

क्रिये मीने लग्ने सति विशेषेण रुद्राश्रितराशौ मरणं भवति ॥ ४३ ॥

**द्वन्द्वे रुद्रे तदन्तं प्रायः ॥ ४४ ॥**

द्वन्द्वे द्विस्वभावराशौ रुद्रद्वये स्थिते सति प्रायस्तदन्तं रुद्राश्रितराशिपर्यन्तं निधनं भवति । अथ वा द्वन्द्वे लग्नाष्टमे रुद्रद्वये तदन्तं रुद्राश्रितराशिदशायां मरणं भवतीति ॥ ४४ ॥

अथ तदेव विवृणोति ।

**प्रथममध्यमोत्तमेषु वा तत्तदायुषाम् ॥ ४५ ॥**

तत्तदायुषामल्पमध्यदीर्घायुषां प्रथममध्यमोत्तमेषु शूलेषु क्रमेणायुःसमाप्तिर्भवतीति ॥ ४५ ॥

अथ प्रकारान्तरेणायुर्निश्चेतुं माहेश्वरग्रहं लक्षयति ।

**स्वभावेशो महेश्वरः ॥ ४६ ॥**

आत्मकारकादष्टमेशो महेश्वरो भवति ॥ ४६ ॥

**स्वोच्चे स्वगृहे रिपुभावेशप्राणी ॥ ४७ ॥**

आत्मकारके स्वोच्चे वा स्वगृहे स्थिते तदात्मकारकस्य द्वादशाष्टमेशयोर्मध्ये यो बली स महेश्वरः । यत् तु सुबोधिन्यां "कारकादष्टमेशे स्वोच्चे स्वगृहे वा स्थिते । द्वादशाष्टमेशयोर्मध्ये यो बली स एव महेश्वरः स्यान्न तु स्वभावेशः" इत्युक्तं तदसङ्गतं प्रायोऽष्टमेशस्यैव बलवत्त्वदर्शनात् । द्वादशेशस्य माहेश्वरत्वाभावात् । तथा च "स्वोच्चे स्वग्रहे रिपुभावेश-

प्राणी"-इति पाठं स्वीकृत्य स्वामिना "कारकोच्चराशौ सग्रहे सति द्वादशेशाष्टमेशयोर्मध्ये यो बली स महेश्वरो भवति"-इति यदुक्तं तदप्यसङ्गतम् । यतोऽस्मिन् ग्रन्थे कारकोच्चराशिमालम्ब्य फलकथनाभावात् प्रसाङ्गाभावाच्च । अथ वा कारकादष्टमेशे कारकोच्चराशौ गते वा कारकराशौ गते तदा द्वादशेशाष्टमेशयोर्मध्ये यो बली स महेश्वरः स्यादित्यप्यर्थः समुचित इति ॥ ४७ ॥

## पाताभ्यां योगे स्वस्य तयोर्वा योगे ततः ॥ ४८ ॥

स्वस्य आत्मकारकस्य पाताभ्यां राहुकेतुभ्यां योगे अथ वा तयो राहुकेत्वोः कारकाद्योगेऽष्टमेशयोगे सति कारकाद्व्यादिगणनया षष्ठो ग्रहो महेश्वरो भवति । द्वित्राणां महेश्वराणां सम्भवे यो बली स महेश्वरः स्यादिति ॥ ४८ ॥

अथ ब्रह्मग्रहं लक्षयति ।

## प्रभुभाववैरीशप्राणिपितृलाभप्राण्यनुचरो विषमस्थो ब्रह्मा ॥ ४९ ॥

अत्र पूर्वसूत्रात् स्वपदमनुवृत्य "कारकात् षष्ठाष्टमद्वादशेशानां मध्ये यो बली स लग्नसप्तमयोर्मध्ये बलवतोऽनुचरश्चेत् तथा विषमस्थश्च भवेत् तदा ब्रह्मा स्यात्"-इति काशिकायां यदुक्तं तदयुक्तम् । "ब्रह्मा स्वभावेशो भावस्थः"-इति वक्ष्यमाणत्वात् । पितृलाभप्राणीति पदस्य सूत्रमध्ये स्थितत्वात् "देहलीदीपक"-न्यायेन लग्नसप्तमयोर्मध्ये यो बली तस्मात् प्रभुभाववैरीशानां षष्ठाष्टमद्वादशेशानां मध्ये यो बली स यदि लग्नसप्तमयोर्मध्ये बलिनो राशेरनुचरः पृष्ठस्थः सन् विषमस्थो मेषमिथुनादिराशिगतश्चेत् तदा स ब्रह्मा भवति । लग्नस्य पृष्ठराशयः सप्तमभोग्याल्लग्नभुक्तपर्यन्तं शेषं सप्तमस्य पृष्ठराशयो भवन्तीति ॥ ४९ ॥

अत्र विशेषमाह ।

**ब्रह्मणि शनौ पातयोर्वाततः ॥ ५० ॥**

शनौ शनैश्चरे ब्रह्मणि प्राप्ते वा वक्ष्यमाणरीत्या पातयो राहुकेत्वोर्ब्रह्मणि प्राप्तयोः सतोस्ततः पृष्ठो ग्रहो ब्रह्मा भवतीति । ब्रह्मलक्षणाक्रान्तः शन्यादिर्न ब्रह्मा स्यात् ॥ ५० ॥

**बहूनां योगे स्वाजातीयः ॥ ५१ ॥**

बहूनां ब्रह्मग्रहाणां योगे प्राप्तौ स्वजातीयो योऽधिकांशः स ब्रह्मा भवति ॥ ५१ ॥

**राहुयोगे विपरीतम् ॥ ५२ ॥**

अधिकांशविचारे कर्त्तव्ये येन ग्रहेण राहुयोगे सति तस्य विपरीतमधिकांशकत्वं स्यादिति ॥ ५२ ॥

**ब्रह्मा स्वभावेशो भावस्थः ॥ ५३ ॥**

आत्मकारकाद्भावेशोऽष्टमेशो ब्रह्मा तथा यो ग्रहो भावस्थोऽष्टमस्थः सोऽपि ब्रह्मा स्यादिति ॥ ५३ ॥

**विवादे बली ॥ ५४ ॥**

द्वयोर्ब्रह्मणोर्विवादे प्राप्ते यो बली स ब्रह्मा स्यादिति ॥ ५४ ॥

ब्रह्ममाहेश्वरग्रहयोः फलं दर्शयति ।

**ब्रह्मणो यावन्माहेश्वरर्क्षदशान्तमायुः ॥ ५५ ॥**

ब्रह्मणः सकाशान्माहेश्वरर्क्षदशान्तं स्थिरदशायामायुःकालो ज्ञेयः ॥ ५५ ॥

**तत्रापि महेश्वरभावेशत्रिकोणाब्दे ॥ ५६ ॥**

तत्रापि महेश्वराश्रितराशिदशायामपि । महेश्वरग्रहस्य यो भावेशोऽष्टमेशस्तस्य त्रिकोणस्थराशेरब्दे वर्षेऽन्तर्दशायामिति ॥ ५६ ॥

अथ मारकग्रहान् लक्षयति सूत्राभ्याम् ।

**स्वकर्मचित्तरिपुरोगनाथप्राणिमारकः ॥ ५७ ॥ चित्तनाथः प्रायेण ॥ ५८ ॥**

स्वादात्मकारकाल्लग्नाद्वा कर्मचित्तरिपुरोगनाथानां तृतीयषष्ठद्वादशाष्टमेशानां मध्ये यो बली स मारकग्रहो भवति । तत्र चित्तनाथो यो लग्नात् कारकाद्वा षष्ठेशः स प्रायेण मारकः ॥ ५७–५८ ॥

**तदृक्षदशायां निधनम् ॥ ५९ ॥**

तस्य मारकग्रहस्य राशिदशायां मारकाश्रयीभूतराशिदशायां मारकस्वामिराशिदशायां वा मारकग्रहस्य नाक्षत्रदशायां निधनं स्यात् ॥ ५९ ॥

**तत्रापि कालाद्रिपुरोगचित्तनाथापहारे ॥ ६० ॥**

**इति जैमिनिसूत्रे द्वितीयाध्यायस्य प्रथमः पादः ।**

तत्रापि मारकराशिदशायां मारकग्रहदशायामपि वा कालात् कारकसप्तमाज्जन्मलग्नसप्तमाद्वा षष्ठाष्टमद्वादशेशानामपहारेऽन्तर्दशायां निधनं स्यात् । एषां मध्ये बलवतोऽन्तर्दशायां निधनं कल्पनीयम् ।

अत्र विशेषो वृद्धैरुक्तः ।

"षष्ठाष्टमेशौ भवतो मारकावष्टमेश्वरः ।
प्रायेण मारको राशिदशास्वत्र विशेषतः ॥
षष्ठभे पापभूयिष्ठे षष्ठेशो मुख्यमारकः ।
षष्ठात् त्रिकोणगो वाऽपि मुख्यमारक इष्यते ॥
मध्यायुषि मृतिः षष्ठदशायामष्टमस्य वा ।
षष्ठात् त्रिकोणस्य पुनर्दीर्घाल्पविषये भवेत् ॥
षष्ठे बलयुते तस्य त्रिकोणे मृतिमादिशेत् ।
षष्ठेशश्चेद्बलाढ्यः स्यात् तत्त्रिकोणे मृतिं वदेत् ॥
व्यवस्थेयं समस्ताऽपि कारकादिदशास्वपि ।

बलिनः शुक्रशशिनोर्ग्राह्यं षष्ठाष्टमादिकम् ॥
चरे चरस्थिरद्वन्द्वा इति यो राशिरागतः ।
स एव मारको राशिर्भवतीति विनिर्णयः ॥
बहुराशिसमावेशे बलवान्मारकः स्मृतः ।
चर इत्यादिनाऽऽयुर्यत् तत्समाप्त्युचितो भवेत् ॥
यो राशिः स तु विज्ञेयो मारकः सूत्रसम्मतः" ॥ ६० ॥

इति सूत्रार्थप्रकाशिकायां द्वितीये प्रथमः पादः ।

## रविशुक्रयोः प्राणी जनकः ॥ १ ॥

अथ पित्रादीनां निधनकालं ज्ञापयितुं तत्कारकं दर्शयति । रविशुक्रयोः सूर्यसितयोर्मध्ये बली स पितृकारकः स्यात् ॥ १ ॥

## चन्द्रारयोर्जननी ॥ २ ॥

चन्द्रभौमयोर्मध्ये यो बली स मातृकारकः स्यात् ॥ २ ॥

## अप्राण्यपि पापदृष्टः ॥ ३ ॥

रविशुक्रयोश्चन्द्रारयोश्च मध्ये यो दुर्बलः स पापदृष्टश्चेत् तदा सोऽपि यथाक्रमं पितृमातृकारकः स्यात्। यद्युभौ समबली स्यातां तदावुभावपि कारकसंज्ञां लभेते इत्यर्थः ॥ ३ ॥

## प्राणिनि शुभदृष्टे तच्छूले निधनं मातापित्रोः ॥ ४ ॥

प्राणिनि बलिनि कारके शुभदृष्टे सति तच्छूले तत्त्रिकोणदशायां यथाक्रमं मातापित्रोर्निधनं स्यात् ॥ ४॥

## तद्भावेशे स्पष्टबले ॥ ५ ॥ तच्छूल इत्यन्ये ॥ ६ ॥

अप्राणिकारकस्याप्राणि कारकस्य वाऽष्टमेशे स्पष्टबलेऽधिकबले सति अष्टमेशाश्रितराशितस्त्रिकोणराशिदशायां पितुर्मातुश्च निधनं स्यात्॥५-६॥

## आयुषि चान्यत् ॥ ७ ॥

पित्रादिकानामायुर्विचारेऽन्यदपि प्रकारान्तरं चिन्त्यम् ॥ ७ ॥

अर्कज्ञयोगे तदाश्रिते क्रिये लग्ने मेषदशायां पितुरित्येके ॥ ८ ॥

क्रिये लग्नाद्द्वादशेऽर्कज्ञयोगे सूर्यबुधयोगे तदाश्रयेऽर्कबुधाश्रयेऽर्थात् सिंहकन्यामिथुनानामन्यतमे सति लग्ने मेषदशायां तृतीयपञ्चमराशिदशायां पितुर्निधनं स्यादित्यन्ये वदन्ति ॥ ८ ॥

व्यर्कपापमात्रदृष्टयोः पित्रोः प्राग्द्वादशाब्दात् ॥ ९ ॥

प्राणिनोरप्राणिनोर्वा कारकयोर्व्यर्कपापमात्रदृष्टयो रविरहितकेवलपापदृष्टयोर्द्वादशाब्दात् प्रागेव पित्रोर्निधनं स्यात् ॥ ९ ॥

गुरुशूले कलत्रस्य ॥ १० ॥

गुर्वाश्रितराशेस्त्रिकोणराशिदशायां कलत्रस्य निधनं स्यात् ॥ १० ॥

तत्तच्छूले तेषाम् ॥ ११ ॥

पूर्वोक्तपुत्रमातुलादीनां शूलेऽर्थात् तदाश्रितराशेः शूलदशायां तेषां निधनं स्यात् ॥ ११ ॥

कर्मणि पापयुतदृष्टे दुष्टं मरणम् ॥ १२ ॥

लग्नात् कारकाद्वा तृतीये पापयुतदृष्टे दुष्टं मरणं भवति । अग्निपातजलबन्धनादिप्रयोज्यं दुष्टं मरणम् ॥ १२ ॥

शुभं शुभदृष्टियुते ॥ १३ ॥

लग्नात् कारकाद्वा तृतीये शुभदृष्टियुते शुभं मरणं स्यात् । ज्वरादिरोगप्रयोज्यं शुभं मरणम् ॥ १३ ॥

मिश्रे मिश्रम् ॥ १४ ॥

मिश्रे शुभपापयुतदृष्टे मिश्रं शुभाशुभात्मकं निधनमित्यर्थः ॥ १५ ॥

आदित्येन राजमूलात् ॥ १५ ॥

आदित्येन रविणा युक्ते वा दृष्टे तृतीये राजमूलाद्राजहेतोर्मरणं स्यात् ॥ १५ ॥

**चन्द्रेण यक्ष्मणः ॥ १६ ॥**

चन्द्रमसा युक्ते वा दृष्टे क्षयरोगान्मरणम् ॥ १६ ॥

**कुजेन व्रणशस्त्राग्निदाहाद्यैः ॥ १७ ॥**

भौमेन युक्ते दृष्टे व्रणशस्त्राग्निदाहाद्यैर्निधनम् ॥ १७ ॥

**शनिना वातरोगात् ॥ १८ ॥ मन्दमान्दिभ्यां विषसर्पजलोद्बन्धनादिभिः ॥ १९ ॥ केतुना विषूचीजलरोगाद्यैः ॥ २० ॥ चन्द्रमान्दिभ्यां पूगमदान्नकवलादिभिः क्षणिकम् ॥ २१ ॥ गुरुणा शोफारुचिवमनाद्यैः ॥ २२ ॥ शुक्रेण मेहात् ॥ २३ ॥ मिश्रे मिश्रात् ॥ २४ ॥**

मन्दमान्दिभ्यां शनिगुलिकाभ्यां विषूचिका लोके (हैजा) इति नाम्ना प्रसिद्धा । पूगमदः क्रमुकमदः । मेहः प्रमेहः । शेषं स्पष्टम् । क्षणिकं सत्वरम् ॥ १८-२४ ॥

**चन्द्रदृग्योगान्निश्चयेन ॥ २५ ॥**

तृतीये येन येन ग्रहेण यो यो योगो दर्शितस्तत्र सर्वत्र चन्द्रदृग्योगात् तद्रोगेण निधनस्य निश्चयो वक्तव्यः । चन्द्रदृग्योगाभावे तत्र सन्देह एवेति ॥ २५ ॥

**शुभैः शुभदेशे ॥ २६ ॥**

कारकाल्लग्नाद्वा तृतीये शुभग्रहैर्युतदृष्टे शुभप्रदेशे काश्यादिपुण्यस्थाने मरणम् ॥ २६ ॥

**पापैः कीकटे ॥ २७ ॥**

पापैर्युतदृष्टे तस्मिन् कीकटे मगधादिपापदेशे निधनमिति ॥ २७ ॥

**गुरुशुक्राभ्यां ज्ञानपूर्वम् ॥ २८ ॥**

जीवभार्गवाभ्यां तृतीये स्थिताभ्यां ज्ञानपूर्वं मरणम् ॥ २८ ॥

## अन्यैरन्यथा ॥ २९ ॥

तृतीये गुरुशुक्रयोर्दृग्योगाभावेऽज्ञानपूर्वं मरणम् ॥ २९ ॥

## लेयजनकयोर्मध्ये शनिराहुकेतुभिः पित्रोर्न संस्कर्त्ता ॥३०॥

लग्नद्वादशयोर्मध्ये शनिराहुभ्यां शनिकेतुभ्यां वा स्थिताभ्यां पित्रोः संस्कर्त्ता न स्यात् । लग्नमध्ये स्थिताभ्यां पितुः संस्कर्त्ता न स्यात् । द्वादश-मध्ये स्थिताभ्यां मातुः संस्कर्त्ता न स्यादिति ॥ ३० ॥

लग्नद्वादशमध्यं प्रकटयति ।

## लेयादिपूर्वार्धे जनकाद्यपरार्धे ॥ ३१ ॥

लग्नादिप्रथमषट्के लग्नस्य मध्यम् । द्वादशादिव्युत्क्रमेणोत्तरषट्के द्वादशस्य मध्यम् । तयोर्मध्ये यथाक्रमेण शनिराहुशनिकेतुसत्त्वे मातापित्रोः संस्कर्त्ता न स्यात् ॥ ३१ ॥

## शुभदृग्योगान्न ॥ ३२ ॥

## इति जैमिनिसूत्रे द्वितीयाध्यायस्य द्वितीयः पादः ।

शुभदृग्योगान्नेदं फलं भवति पित्रोः संस्कर्त्ता स्यादित्यर्थः ॥ ३२ ॥

इति सूत्रार्थप्रकाशिकायां द्वितीये द्वितीयः पादः ।

अथास्मिन् पादे दशाभेदबलभेदादीनाह । तत्रादौ नवांशदशां कथयति ।

## विषमे तदादिर्नवांशदशा ॥ १ ॥ अन्यथाऽऽदर्शादिः ॥२॥

विषमे जन्मलग्ने लग्नादिः क्रमेण नवांशदशा भवति । अन्यथा समे लग्ने तु आदर्शादिः । अथ वाऽऽदर्शादिर्द्वादशादिव्युत्क्रमेण भवति । तथा विषमे लग्ने लग्नात् समे सप्तमादिति तु प्रसिद्धमेव किन्त्वादर्शः सम्मुखो भवति । तथैव लग्नस्य सम्मुखराशिः सप्तमं भवति । प्रतिराशौ नवाब्दमिता दशा भवति । तेनास्या नवांशदशेति नाम बोध्यम् ।

यत् तु ।

"स्थिरराशेः षष्ठराशिश्चरस्याष्टम एव सः ।
द्विस्वभावस्य राशिस्तु सप्तमः सम्मुखो मतः" ॥

इति पन्थैरुक्तं तत्स्वकल्पितमेवेत्यनुमीयते । अन्यत्र प्रमाणाभावात् । विषमे लग्ने क्रमात् तदादिर्दशा भवति । समे तु आदर्शादिर्व्युत्क्रमाद्दशा भवति । "सम्मुखं तस्य चादिभम्"-इत्युक्तत्वात् । तेन सर्वत्र विषमराशौ क्रमतः समे व्युत्क्रमतो दशा प्रवर्तनीयेत्यर्थः ॥ १-२ ॥

अथ स्थिरदशामाह ।

## शनिनन्दपावकाः क्रमादब्दा स्थिरदशायाम् ॥ ३ ॥

स्थिरदशायां क्रमाच्चरादिराशीनां सप्ताष्टनवमितानि वर्षाणि भवन्ति । यथा मेषे सप्त वृषेऽष्टौ मिथुने नव पुनः कर्कटे सप्त इत्यादि ॥ ३ ॥

## ब्रह्मादिरेषा ॥ ४ ॥

एषा स्थिरदशा ब्रह्मग्रहादिर्ब्रह्मग्रहाश्रितराशितः प्रवृत्ता भवतीत्यर्थः ॥ ४ ॥

## अथ प्राणः ॥ ५ ॥

अथानन्तरं वलभेदमाह ॥ ५ ॥

## कारकयोगः प्रथमो भानाम् ॥ ६ ॥

भानां राशीनां कारकाणां योगः प्रथम आद्यं वलं स्यात् । "अग्रहात् सग्रहो ज्यायान्"-इत्यादि ॥ ६ ॥

## साम्ये भूयसा ॥ ७ ॥

उभयत्र ग्रहसाम्ये भूयसा ग्रहयोगेनाधिकसंख्यकग्रहयोगेन वलं स्यात् ॥७॥

## ततस्तुङ्गादिः ॥ ८ ॥

कारकयोगसमत्वेऽपि जाते उच्चादिवलं चिन्त्यम् ॥ ८ ॥

## निसर्गस्ततः ॥ ९ ॥

ततस्तुङ्गादिबलानामपि साम्ये निसर्गबलं चिन्त्यम् ।

तदुक्तं वृद्धैः ।

"अग्रहात् सग्रहो ज्यायान् सग्रहेऽप्यधिकग्रहः ।
साम्ये चरस्थिरद्वन्द्वाः क्रमात् स्युर्बलशालिनः"-इति ॥ ९ ॥

## तदभावे स्वामिन इत्थं भावः ॥ १० ॥

तदभावे राशौ कारकयोगाभावे स्वामिनः कारकयोगादिबलवशाद्भावस्य बलाबलत्वं ज्ञातव्यमिति भावः ॥ १० ॥

## आग्रायतोऽत्र विशेषात् ॥ ११ ॥

अत्र बलप्रकरणे विशेषात् तु आग्रायतोऽग्रे गतोऽधिकांशेन स्थितो ग्रहो बली स्यात् । अग्रमायतो गत इत्यग्रायतोऽग्रायत एव आग्रायतः । अर्थाद् बहुष्वेकराशिगतेषु तत्राधिकांशको बली स्यात् ॥ ११ ॥

## प्रातिवेशिकः पुरुषे ॥ १२ ॥

पुरुषे विषमराशौ प्रातिवेशिको ग्रहो बलकर्त्ता प्रतिवेशौ स्थितः प्रातिवेशिको द्वितीयद्वादशगत इत्यर्थः ॥ १२ ॥

## इति प्रथमः ॥ १३ ॥

इति रीत्या राशीनां प्रथमः प्राणः कथितः ॥ १३ ॥

## स्वामिगुरुज्ञदृग्योगो द्वितीयः ॥ १४ ॥

स्वामिगुरुज्ञदृग्योगो द्वितीयः प्राणो बलं भवति ।

तथा च होरायाम् ।

"होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटाः" ।

इत्यनेन षड्वर्गबलं समुद्दिष्टमिति ॥ १४ ॥

**स्वामिनस्तृतीयः ॥ १५ ॥**

स्वामिनो बलं भावानां तृतीयः प्राणः। "भावानां बलमीशजम्"-इति ॥ १५ ॥

**स्वात् स्वामिनः कण्टकादिष्वपारदौर्बल्यम् ॥ १६ ॥**

स्वादात्मकारकात् कण्टकादिषु केन्द्रपणफरापोक्लिमेषु स्वामिनोऽपारदौर्बल्यं भवति। केन्द्रे शून्यं तदधिकं पणफरे तदधिकमापोक्लिमे इत्यनेन केन्द्रादिबलस्योक्तत्वाद्ग्रहाणामपि पद्धत्युक्त्या षड्बलं विधेयमिति सूचितं भवति ॥ १६ ॥

**चतुर्थतः पुरुषे ॥ १७ ॥**

पुरुषे विषमे राशौ पापदृग्योग इत्यादिना वक्ष्यमाणचतुर्थबलादपि बलं भवतीत्यर्थः ॥ १७ ॥

अथ निर्याणशूलदशामाह।

**पितृलाभप्रथमप्राण्यादिः शूलदशानिर्याणे ॥ १८ ॥**

निर्याणे निधने विचारे लग्नसप्तमयोर्मध्ये यो बलवाँस्तदादिः शूलदशा विचार्या। यत्राब्दानयनं नोक्तं तत्र सर्वत्र नवाब्दा ग्राह्या इति ॥ १८ ॥

**पितृलाभपुत्रप्राण्यादिः पितुः ॥ १९ ॥**

लग्नसप्तमयोर्यथा प्राप्तक्रमोत्क्रमगणनया यौ नवमराशी तयोर्मध्ये बलवतो शूलदशा पितुर्निधने विचारणीया ॥ १९ ॥

**आदर्शादिर्मातुः ॥ २० ॥**

मातृनिधने विचारे बलवतश्चतुर्थादेः शूलदशा विचार्या ॥ २० ॥

**कर्मादिर्भ्रातुः ॥ २१ ॥**

लग्नात् सप्तमाद्वा बलिनस्तृतीयस्थानात् कनिष्ठभ्रातुर्निर्याणशूलदशा प्रवर्त्तयितव्या ॥ २१ ॥

## मात्रादिर्भगिनीपुत्रयोः ॥ २२ ॥

अत्र मातृ-आदिरिति पदच्छेदः। लग्नात् सप्तमाद्वा बलिनः पञ्चमादेर्भगिनीपुत्रयोर्निर्याणशूलदशा भवति ॥ २२ ॥

## व्ययादिर्ज्येष्ठस्य ॥ २३ ॥

ज्येष्ठस्य भ्रातुर्बलत एकादशराशेः प्रवृत्तशूलदशायां निर्याणं वेदितव्यम् ॥ २३ ॥

## पितृवत् पितृवर्गे ॥ २४ ॥

यथा नवमादिप्रवृता शूलदशा पितुर्निर्याणाय तथैव पितृवर्गस्यापि नवमादिशूलदशा निर्याणाय भवति। अर्थात् तस्यामेव पितृव्यादेरपि निर्याणं विचारणीयम् ॥ २४ ॥

## मातृवन्मातृवर्गे ॥ २५ ॥

स्पष्टम् ॥ २५ ॥

अथ ब्रह्मदशामाह।

## ब्रह्मादिः पुरुषे समा दासान्ताः ॥२६॥

पुरुषे विषमराशौ ब्रह्मग्रहे सति ब्रह्मादिर्ग्रहाश्रितराशितः क्रमाद्दशा प्रवर्तनीया। तत्र समा अब्दा दासान्ता ग्राह्याः स्वस्वराशेः षष्ठराशिस्वामिपर्यन्ता ग्राह्या इत्यर्थः। ननु दासशब्देन षष्ठराशिपर्यन्तमित्यर्थः कुतो न गृह्यते। अत्रोच्यते। तत्र द्वासप्ततिवर्षभावादयोग्यत्वाच्च षष्ठराशिस्वाम्यन्तमित्यर्थः समुचित इति ॥ २६ ॥

## स्थानव्यतिकरः ॥ २७॥

तत्र स्थानस्य व्यत्यासः स्यात्। सप्तमसम्बन्धोऽस्तीति। अर्थात् समराशौ स्थिते ब्रह्मग्रहे तत्सप्तमादिव्युत्क्रमाद्दशा लेख्या। अर्थाद्विषमे ब्रह्मग्रहे क्रमाद्दशा लेख्या समे व्युत्क्रमादिति भावः ॥ २७ ॥

अथ चतुर्थबलमाह ।

पापदृग्योगस्तुङ्गादिग्रहयोगः ॥ २८ ॥

राशीनां यत्र कुत्र स्थितपापदृग्योगो बलम् । तथा तुङ्गादिस्थिताना-मुच्चमूलत्रिकोणस्वराशिमित्रादिस्थानस्थितानां शुभानां दृग्योगश्च बलं भवति । कारकयोग इत्यादिना बलतृतीयमुक्तं चतुर्थमस्मिन् सूत्रे निबद्धम् । तेन चत्वारः प्राणा इत्यर्थः ॥ २८ ॥

पञ्चमे पदक्रमात् प्राक्प्रत्यक्त्वं चरदशायाम् ॥ २९ ॥

चरदशायां पञ्चमे लग्नान्नवमे पदक्रमाद्विषमसमपदक्रमात्प्राकप्रत्यक्त्वं क्रमोत्क्रमत्वं भवति । अर्थात् क्रमव्युत्क्रमरीत्या दशा लेख्या इत्यर्थः ॥२९॥

अत्र शुभः केतुः ॥ ३० ॥

इति जैमिनिसूत्रे प्रथमाध्यायस्य तृतीयः पादः ।

अस्मिन् ग्रन्थे केतुः शुभः शुभफलद इत्यर्थः ॥ ३० ॥

इति सूत्रार्थप्रकाशिकायां प्रथमे तृतीयः पादः ।

दशाप्रकरणं विवृणोति ।

द्वितीयं भावबलं चरनवांशे ॥ १ ॥

चरराशेर्नवांशदशायां द्वितीयं भावबलं स्वामिगुरुज्ञदृग्योगेति प्रोक्तं फलादेशाय ग्राह्यम् ॥ १ ॥

दशाश्रयो द्वारम् ॥ २ ॥ ततस्तावतिथं बाह्यम् ॥ ३ ॥

यस्मिन् काले यस्य राशेर्या चरस्थिरादिषु सिद्धा दशा वर्त्तते तस्य राशेर्द्वारसंज्ञा । अयमेव पाकराशिश्च । तथा प्रथमदशाप्रदराशेर्यावत्संख्यो द्वारराशिस्ततस्तावत्संख्यो राशिर्बाह्यमित्युच्यते । एवमेव भोगराशिमपि व्यवहरन्ति । अत्र यदि प्रथमदशाप्रदराशितो द्वारराशेर्गणना क्रियते न लग्नात् क्रियते ।

तद्वा ।

"स एव भोगराशिश्च पर्याये प्रथमे स्मृतः"।

इति न संगच्छते ॥ २–३ ॥

अथानयोः फलमाह ।

## तयोः पापे बन्धयोगादि ॥ ४ ॥

तयोर्द्वारबाह्ययोः पापे पापयोगे सति तद्द्वारराशिदशायां बन्धयोगादिकं भवति ।

तदुक्तं वृद्धैः ।

"पाके भोगे च पापाढ्ये देहपीडा मनोव्यथा ॥ ४ ॥

## स्वर्क्षेऽस्य तस्मिन्नोपजीवस्य ॥ ५ ॥

तस्मिन् द्वारराशौ बाह्यराशौ वा पापयुक्ते अस्य पापस्य स्वर्क्षे कथम्भूतस्य पापस्य उपजीवस्य उप समीपे जीवो यस्येति तस्य अर्थाद्गुरुसमीपगतस्य तदाऽस्य द्वारराशेर्दशायां बन्धयोगादिकं न भवतीति ॥ ५ ॥

## भग्रहयोगोक्तं सर्वमस्मिन् ॥ ६ ॥

अस्मिन् द्वारराशिदशायां ग्रहराशियोगेनोक्तं सर्वं फलं वेदितव्यम् ॥६॥

अथ केन्द्रदशामाह ।

## पितृलाभप्राणितोऽयम् ॥ ७ ॥

लग्नसप्तमयोर्मध्ये बलवत आरम्भो भवति ।

तदुक्तं वृद्धैः ।

"बलिनः शुक्रशशिनोः केन्द्राख्यां तु दशां नयेत्"-इति ॥ ७ ॥

अथ तल्लेखनक्रममाह ।

## प्रथमे प्राक्प्रत्यक्त्वम् ॥ ८ ॥

लग्ने चरराशौ लग्नात् सप्तमाद्वा प्रथमप्रवृत्तक्रमोत्क्रमगणनया प्राक्प्रत्यक्त्वं क्रमोत्क्रमं भवति । प्रथमद्वितीयादि प्रथमद्वादशादि वेति ॥ ८ ॥

## द्वितीये रवितः ॥ ९ ॥

द्वितीये स्थिरराशौ लग्ने बलवल्लग्नात् सप्तमाद्वा क्रमोत्क्रमगणनया षष्ठराशितो दशा प्रवृत्ता भवति ॥ ९ ॥

## पृथक्क्रमेण तृतीये चतुष्टयादि ॥ १० ॥

तृतीये द्विस्वभावराशौ लग्ने पृथक्क्रमेण लग्नपञ्चमनवनक्रमेण चतुष्टयादि केन्द्रादिदशा भवति । अर्थाद्विषमे द्विस्वभावराशौ लग्ने आदौ लग्नकेन्द्रस्य ततः पञ्चमकेन्द्रस्यार्थात् पणफरस्य ततो नवमकेन्द्रस्यार्थादापोक्लिमस्य । समे द्विस्वभावलग्ने आदौ केन्द्रस्य ततो व्युत्क्रमेण पञ्चमकेन्द्रस्यार्थान्नवमकेन्द्रस्यापोक्लिमस्य ततो व्युत्क्रमेण नवमकेन्द्रस्यार्थात् पञ्चमकेन्द्रस्य पणफरस्य दशा भवतीति ।

तथा च वृद्धवाक्यानि ।

"चरेऽनुचितमार्गः स्यात् षष्ठषष्ठादिकाः स्थिरे ।
उभये कण्टकाज्ज्ञेया लग्नपञ्चमभाग्यतः ॥
चरस्थिरद्विस्वभावेष्वोजेषु प्राक्क्रमो मतः ।
तेष्वेव त्रिषु युग्मेषु ग्राह्यं व्युत्क्रमतोऽखिलम् ॥
एवमुल्लिखितो राशिः पाकराशिरिति स्मृतः ।
स एव भोगराशिश्च पर्याये प्रथमे स्मृतः ॥
लग्नाद्यावतिथः पाकः पर्याये यत्र दृश्यते ।
तस्मात् तावतिथो भोगः पर्याये तत्र गृह्यताम् ॥
तदिदं चरपर्यायस्थिरपर्याययोर्द्वयोः ।
त्रिकोणादिदशायां च पाकभोगप्रकल्पनम्" ॥

अत्र लग्नशब्देन आद्यदशाश्रितराशिर्ग्राह्य इति ॥ १० ॥

अथ कारकेन्द्रदशामाह ।

## स्वकेन्द्रस्थाद्याः स्वामिनो नवांशानाम् ॥ ११ ॥

स्वकेन्द्रस्थाद्याः कारकेन्द्रादिस्था राशयो नवांशानां नवांशतुल्याना-

मब्दानां स्वामिनो भवन्ति । अर्थात् प्रथमं कारकेन्द्रस्थानां राशीनां ततः पणफरस्थानां तत आपोक्लिमस्थानां दशा भवति । अत्र नवांशानामित्युक्ता नवाब्दरूपा दशा सर्वेषां राशीनां ग्राह्येत्यर्थः । अथ वा कारककेन्द्रस्थाद्या ग्रहा नवांशानां तुल्यरूपेण दत्तानां वर्षाणां स्वामिनो भवति । अर्थादादौ कारककेन्द्रस्थानां ग्रहाणां ततः पणफरस्थानां ग्रहाणां तत आपोक्लिमस्थानां ग्रहाणां दशा स्यात् । अत्र नवानां ग्रहाणां समाना एवान्तर्दशा समा नेया "नवांशानाम्"-इत्युक्तत्वात् । दशाब्दानयनमग्रे वक्ष्यति । अत्रादौ बलवत इति रीत्या ज्ञेयम् ॥ ११ ॥

## पितृचतुष्टयवैषम्यबलाश्रयस्थितः ॥ १२ ॥

लग्नस्य चतुष्टये केन्द्रे वैषम्यबलाश्रितो यो राशिस्तमारभ्यद्वादशराशीनां दशा प्रवर्त्तनीया । आदौ केन्द्रस्य ततः पणफरस्य तत आपोक्लिमस्य । ततस्तत्क्रमेण सर्वदुर्बलान्तं नेयमिति ॥ १२ ॥

## स तल्लाभयोरावर्त्तते ॥ १३ ॥

स कारकस्तल्लाभयोर्लग्नसप्तमयोरावर्त्तते परिभ्रमति । अर्थाल्लग्नात् सप्तमाद्वा कारकाश्रितराशिपर्यन्तं संख्या ग्राह्या । तत्र या संख्याऽधिका साऽब्दरूपा कारकस्य दशा भवति । कारकयुक्तानां ग्रहाणां कारकतुल्यैव । अन्येषां तु ग्रहात् कारकपर्यन्तं या संख्या साऽब्दरूपा दशा स्यात् ।

एतदुक्तं वृद्धैः ।

"लग्नात् कारकपर्यन्तं सप्तमाद्वा दशां नयेत् ।
उभयोरधिका संख्या कारकस्य दशासमाः ॥
तद्युक्तानां तु तत्तुल्यं प्रत्येकं स्युर्दशाः क्रमात् ।
ग्रहात् कारकपर्यन्तं संख्याऽन्यस्य दशा भवेत् ॥
कारकस्तद्युतश्चादौ तत्केन्द्रादिस्थितास्ततः ।
दशाः क्रमेण विज्ञेयाः शुभाशुभफलप्रदाः" इति ॥

अथान्तर्दशाविभागः ।

"प्रतिभं नव वर्षाणि कारकाश्रयराशितः ।

जन्म सम्पद्विपत् क्षेमःप्रत्यरिः साधको वधः ॥

मैत्रं परममैत्रं चेत्येवमन्तर्दशां नयेत्"-इति ।

अत्र ग्रहात् कारकपर्यन्तं क्रमोत्क्रमगणनया याऽधिकसंख्या सा ग्राह्या ॥ १३ ॥

## स्वामिबलफलानि च प्राग्वत् ॥ १४ ॥

दशास्वामिग्रहाणां राशीनां च बलानि फलानि च प्राग्वज्ज्ञेयानि इति॥१४॥

## स्थूलान्तर्दशावैषम्याश्रयो मण्डूकस्त्रीकूटः ॥ १५ ॥

स्थूलः सामान्यक्रमः आदर्शो व्युत्क्रमः । अनयोर्मध्ये वैषम्याश्रयो बलवत्क्रममारभ्य लग्नसप्तमयोर्मध्ये बलवतो मण्डूकदशा त्रिकूटक्रमेण भवति। त्रिकूटस्तु चरस्थिरद्विस्वभावात्मकः केन्द्रपणफरापोक्लिमात्मको वा ।

उक्तं च ।

बलिनः शुक्रशशिनोर्ज्ञेया मण्डूकदा दशा ।

केन्द्रादिक्रमेण मण्डूकवत् प्लुत्याऽस्या मण्डूकदशा नाम । तत्रापि बलिनः प्रथमम् । ततः सर्वदुर्बलान्तम् ।

"पुरुषश्चेत् ततो नेया स्त्री चेद्दर्पणतो नयेत्" ।

अस्यार्थः । यदि लग्नं सप्तमो वा पुरुषश्चेद्विषमराशिश्चेत् तदा तत्क्रमेण दशा नेया स्त्री समराशिश्चेत् तदा दर्पणतः सम्मुखराशेर्दशा नेया । व्युत्क्रमेणेत्यर्थः ।

"लग्नं युग्मं यदा तर्हि सम्मुखं तस्य चादिभम्"-इत्युक्तत्वात् ।

अथ वा लग्नसप्तमयोर्मध्ये बलवतो मण्डूकदशा भवति । तत्र वर्षाणि त्रिकूटक्रमेणानेयानि । त्रिकूटक्रमस्तु चरस्थिरद्विस्वभावात्मकः । तत्राब्दास्तु "शशिनन्दपावक"-इत्यादिना पुरा प्रोक्ता । एवमर्थे पूर्वोक्तकेन्द्रदशया सह वर्षभेदेनैक्यं न स्यात् ॥ १५ ॥

## निर्याणाल्लाभादिशूलदशा फले ॥ १६ ॥

फले वक्तव्ये निर्याणराशेः सप्तमाच्छूलदशा प्रवृत्ता भवति । इयं शूलदशा तु रुद्रशूलमाहेश्वरर्क्षादिमारकराशिभेदतोऽनेकविधा । दशावर्षाण्यपि स्थिरादिदशावशादनेकविधानि ॥ १६ ॥

## पुरुषे समाः सामान्यतः ॥ १७ ॥

पुरुषे विषमे समा अब्दाः सामान्यतः क्रमात् स्युः । अत एव समे व्युत्क्रमात् स्यादिति सिद्धम् ।

तदुक्तं वृद्धैः ।

"ओजे लग्ने तदेव स्याद्युग्मे तत्सप्तमं भवेत् ।
दशौजे क्रमतो ज्ञेया युग्मे व्युत्क्रमतो भवेत्" ॥ १७ ॥

नक्षत्रदशामाह ।

## सिद्धा उडुदाये ॥ १८ ॥

उडुदाये नक्षत्रायुर्दाये विंशोत्तर्यष्टोत्तर्यादिका दशाः सिद्धाः शास्त्रान्तरप्रसिद्धा ग्राह्याः ॥ १८ ॥

अथ योगार्धदशामाह ।

## जगत्तस्थुषोरर्धं योगार्धे ॥ १९ ॥

गच्छतीति जगत् चरदशा । तस्थौ इति तस्थिवान् स्थिरदशा । जगत् च तस्थिवांश्चेति जगत्तस्थिवांसौ तयोर्जगत्तस्थुषोश्चरस्थिरदशयोरर्धं योगार्धदशायां दशामानं भवति ॥ १९ ॥

तत्रारम्भस्थानं दर्शयति ।

## स्थूलादर्शवैषम्याश्रयमेतत् ॥ २० ॥

एतद्योगार्धदशा लग्नसप्तमयोर्मध्ये बलवतः प्रवृत्ता भवति ।

उक्तं च वृद्धैः ।

"योगार्धंप्रथमा प्रोक्ता द्वितीया दृष्टिरुच्यते ।
चरस्थिरविमिश्रार्धा दशा योगार्धका मता ॥
बलिनस्तु दशा नेया राशेर्हि शशिशुक्रयोः ।
स्त्री चेदर्पणतो नेया पुरुषश्चेत् ततो नयेत् ॥
सा दशा त्रिविधा प्रोक्ता द्रेष्काणांशर्क्षभेदतः ।
दृष्टियोगपदाद्यस्तु फलं ब्रूयाद्विचक्षणः" ॥ २० ॥

अथ दृग्दशामाह ।

## कुजादिस्त्रिकूटपदक्रमेण दृग्दशा ॥ २१ ॥

कुजादिर्लग्नान्नवमादिस्त्रिकूटपदक्रमेण चरस्थिरद्विस्वभावात्मक-'शशिनन्दपावक'-इत्यादिभेदेन दृग्दशा भवति । आदौ नवमस्य ततो नवमदृष्टराशीनाम् । ततो दशमस्य ततो दशमदृष्टराशीनाम् । तत एकादशस्य तत एकादशदृष्टराशीनां दशा भवति ॥ २१ ॥

तत्र गणनाक्रममुपदिशति ।

## मातृधर्मयोः सामान्यं विपरीतमोजकूटयोः ॥ २२ ॥

## यथासामान्यं युग्मे ॥ २३ ॥

मातृधर्मयोः सिंहकुम्भयोः सामान्यं विपरीतं गणनाक्रमो भवति । ओजकूटयोर्वृषवृश्चिकयोर्विपरीतं सामान्याद्विपरीतं विपरीताद्विपरीतं क्रम इत्यर्थः । तथा युग्मे द्विस्वभावराशौ यथासामान्यं यथाप्रसिद्धम् । अर्थाच्चरराशिषु क्रमेण पञ्चमाष्टमैकादशराशयो दृग्योग्या भवन्ति । स्थिरराशिषु व्युत्क्रमेण पञ्चमाष्टमैकादशराशयो दृग्योग्या भवन्ति । द्विस्वभावराशिषु यथासामान्यं प्रसिद्धचतुर्थसप्तमदशमराशयो दृग्योग्या भवन्तीति । अत्र चरादिराशिषु प्रसिद्धाः शशिनन्दपावकरूपा अब्दा ग्राह्याः । अथ वा सर्वत्र नवनवाब्दा ग्राह्या इति । अथ वा वक्ष्यमाणायां त्रिकोणदशायामुपयोगि-

त्वात् । पूर्वकथितचरदशानयने "न क चित्"-इति सूत्रं विवृणोति । मातृधर्मयोः सिंहकुम्भयोः सामान्यं सामान्यप्रकारेण यद्गणनाक्रमस्तत् तु विपरीतं ज्ञेयम् । तथा युग्मे युग्मराशौ ओजकूटयोर्वृषवृश्चिकयोः सामान्यं सामान्यप्रकारेण यद्वैपरीत्यं तद्यथासामान्यं क्रमरीत्या ज्ञेयमिति ॥ २२-२३ ॥

## पितृमातृधर्मप्राण्यादित्रिकोणे ॥ २४ ॥

त्रिकोणदशायां लग्नपञ्चमनवमानां मध्ये यो बली तस्मात् प्रवृत्तिर्भवति। आरम्भराशितः क्रमोत्क्रमाभ्यां द्वादशराशीनां दशा भवति ।

तदुक्तं वृद्धैः ।

"लग्नत्रिकोणे यो राशिर्बलवानुक्तहेतुभिः ।
तदारभ्योन्नयेच्छ्रीमच्चरपर्यायवद्दशा ॥
युग्मराशिभुवां पुंसामोजं गृह्णीत सम्मुखम् ।
ओजराशिभुवां स्त्रीणां युग्ममेव समाश्रयेत् ॥
क्रमोत्क्रमाभ्यां गणयेदोजयुग्मेषु राशिषु" ।

चरपर्यायवदिति कथनात् 'नाथान्ताः समाः'-इति रीत्याऽब्दानयनमत्र कार्यम् ।

अथ वा ।

"अग्रहात् सग्रहो ज्यायान् सग्रहेष्वधिकग्रहः ।
साम्ये चरस्थिरद्वन्द्वाः क्रमात् स्युर्बलशालिनः ॥
लग्नत्रिकोणे यो राशिर्बलवानुक्तहेतुभिः ।
तदारभ्योन्नयेच्छ्रीमच्चरपर्यायवद्दशा ॥
क्रमाद्वृषे वृश्चिके च व्युत्क्रमात् कुम्भसिंहयोः ।
षष्ठषष्ठादिका ग्राह्या इत्येतावद्विशिष्यते" ॥

इत्यनेन यदि लग्नपञ्चमनवमानां मध्ये यो बली स चेच्चरराशिर्वा द्विस्वभावराशिस्तदा तदारभ्य क्रमव्युत्क्रमभेदेन विषमसमपदक्रमाद्दशा नेया। यदि स्थिरराशिश्चेत् तदा षष्ठषष्ठक्रमेण दशा नेया। वर्षानयनं तु चरदशा-

तुल्यमेव। परन्तु त्रिकोण इति पञ्चशादादौ लग्नत्रिकोणस्य। ततो द्वितीयत्रिकोणस्य ततस्तृतीयत्रिकोणस्य ततश्चतुर्थत्रिकोणस्य बलक्रमाद्दशा समा नेया इति प्रकटितं भवति ।

अन्यश्च विशेषो वृद्धेनोक्तः ।

"त्रिकोणदृष्टिपर्यायदशास्वेवं फलस्थितिः ।
त्रिकोणाख्यदशायां तु विशेषोऽन्योऽपि कथ्यते ॥
जन्मकालग्रहस्थित्या गोचरस्थग्रहैरपि ।
विचारितैः प्रवक्तव्यं स्यात् त्रिकोणदशाफलम्" ॥

इति कथनात् त्रिकोणदशानुसारेण विशेषफलविपाको भवतीत्यनुमीयते ॥ २४ ॥

## तत्र द्वारबाह्याभ्यां तद्वत् ॥ २५ ॥

तत्र त्रिकोणदशायां द्वारबाह्याभ्यां पूर्ववदेव फलं विचार्यमिति॥२५॥

## धासगैरिकात् पलिकरात् कारकैः फलादेशः ॥२६॥

तत्तत्कारकेभ्यः सप्तमतृतीयप्रथनवमेभ्यो यथायोगं तेषां तेषां फलादेशः कर्त्तव्यः। सप्तमात् स्त्रीविचारः। तृतीयाद्भ्रातृविचारः। प्रथमाच्छरीरविचारः। नवमात् पितुर्धर्मस्य च विचारः कार्यं इति ॥ २६ ॥

नक्षत्रदशामाह ।

## ताराकांशे मन्दाद्यो दशेशः ॥ २७ ॥

ताराया नक्षत्रस्याकांशे द्वादशांशे मन्दाद्यो लग्नादिराशयो दशेशः। जन्मदिने यच्चन्द्रनक्षत्रं तस्या याः सर्वर्क्षघटिकास्तद्द्वादशाधा कृत्वा द्वादशसु खण्डेषु क्रमेण लग्नादिराशयो दशास्वामिनो भवन्ति। लग्नं समारभ्य क्रमोत्क्रमगणनया द्वादशराशीनां दशा स्यात् । अत्र नव नवाब्दा ग्राह्या इति स्पष्टम् ॥ २७ ॥

## तस्मिन्नुच्चे नीचे वा श्रीमन्तः ॥ २८ ॥ स्वमित्रभे

**किञ्चित् ॥ २९ ॥ दुर्गतोऽपरथा ॥ ३० ॥**

तस्मिन् तारालग्ने स्वोच्चस्थे वा नीचस्थे सति श्रीमन्तः स्युः । मित्रभे स्थिते किञ्चिच्छ्रीमन्तः । अन्यथा शत्रुराशौ स्थिते दुर्गतो दरिद्रो भवति ।

तदुक्तमाद्यैः ।

"जन्मतारे द्वादशधा विभक्ते यत्र चन्द्रमाः ।
लग्नात् तावतिथे राशौ न्यसेदाद्यदशाधिपम् ॥
स यद्युच्चे तथा नीचे तदा स्याद्राजसेवकः ।
स्वमित्रर्क्षे सुखी शत्रुराशौ निःस्वसमे समः"-इति ॥ २८-३० ॥

**स्ववैषम्ये यथास्वं क्रमव्युत्क्रमौ ॥ ३१ ॥ साम्ये विपरीतम् ॥ ३२ ॥ शनौ चेत्येके ॥ ३३ ॥ अन्तर्भुक्त्यंशयोरेतत् ॥ ३४ ॥**

अथान्तर्दशोपदशयोर्विशेषमाह सूत्रैः । स्ववैषम्ये आत्मकारकस्यौजपदत्वे यथास्वं यथाक्रमं क्रमव्युत्क्रमौ स्तः । ओजपदे ओजराशिश्चेत् क्रमः । युग्मराशिश्चेद्व्युत्क्रमः । साम्ये विपरीतम् । साम्ये युग्मपदत्वे विपरीतम् । युग्मराशौ क्रम ओजराशौ व्युत्क्रम इति । यथा कारकवशात् क्रमव्युत्क्रमौ स्तस्तथैव शनावपि विचार्यमिति केचित् । स्वपदोपादानात् कारकान्तर्दशायामुपदशायां चेदं वेदितव्यम् ॥ ३१-३४ ॥

**शुभा दशा शुभयुते धाम्न्युच्चे वा ॥ ३५ ॥**

धाम्नि राशौ शुभयुते शुभा दशा वा उच्चंगते ग्रहे तस्मिन् शुभा दशा वा तदीशे स्वोच्चे शुभा दशा स्यात् ॥ ३५ ॥

**अन्यथाऽन्यथा ॥ ३६ ॥**

पापयुते नीचगे ग्रहे वा तदीशे नीचगे तस्मिन् राशावशुभा दशा तस्य भवतीति ॥ ३६ ॥

## सिद्धमन्यत् ॥ ३७ ॥

## इति जैमिनिसूत्रे द्वितीयाध्यायस्य चतुर्थः पादः ।

अन्यद्यदत्र नोक्तं तत् सिद्धं शास्त्रान्तरप्रसिद्धं ज्ञातव्यमित्यर्थः॥३७॥

अथोदाहरणानि ।

तन्वादी ग्रहाः ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | ल. |
|---|---|---|---|---|---|---|---|---|
| २ | ६ | ४ | १ | ३ | २ | ६ | ० | ७ |
| २ | २२ | १५ | १२ | २३ | ११ | २० | ९ | १२ |
| ३८ | २४ | ५० | ४८ | ४० | २८ | ११ | ४ | २ |
| ३० | ४३ | ३१ | २४ | १६ | २० | ४० | ५१ | ५१ |

कारकाः ।

| आत्मा | अमात्यः | भ्राता | माता | पुत्रः | ज्ञातिः | दाराः |
|---|---|---|---|---|---|---|
| बृ. | चं. | श. | मं. | बु. | शु. | सू. |
| ३ | ६ | ६ | ४ | १ | २ | २ |
| २३ | २२ | २० | १५ | १२ | ११ | २ |
| ४० | २४ | ११ | ५० | ४८ | २८ | ३८ |
| १६ | ४३ | ४० | ३१ | २४ | २० | ३० |

कारकांशकुण्डली ।




प्रकारान्तरेण ।




चरदशानयने लग्नं विषमपदे तेन क्रमगणना । तत्स्वामिनौ कुजकेतू तयोर्मध्ये बली केतुरतः केतौ ६।९।४।५१ लग्नं७।१२।२।५१ शोधितम्१०।२७।२।०शेषाणि राशितुल्यानि१०वर्षाणि। अंशाद्यं द्विगुणितं५४।४ पञ्चभक्तं लब्धा मासाः१०।शेषं४।४ त्रिंशद्गुणं १२२पञ्चभक्तं लब्धानि२४दिनानि। शेषं२ षष्टिगुणं१२०पञ्चभक्तं लब्धा घट्यः२४ । एवं लग्नस्य चरदशा १०।१०।२४।२४। लग्नम्७।१२।२।५१। लग्नस्वामिनि भौमे ४।१५।५०।३१शोधिते शेषम्९।३।४७।४० । इदं भौमे युतं जातं लग्नस्य पदम्१।१९।३८।३१ । होरालग्नानयनार्थमिष्टं३० द्विघ्नं ६०पञ्चभक्तं लब्धा राशयः१२सूर्ये युक्ता

लग्नस्य होरालग्नम्२।२।३८।३० । होरालग्नजन्मलग्नयोर्योगः९।१४।४१।२१ । इदं सममतो द्वादशशुद्धं जातो लग्नस्य वर्णदः२।१५।१८।२९ । अतो वलयत् होरालग्नं विशोध्य पूर्ववल्लग्नस्य वर्णददशा०।५।२।१।४८आयुर्दायानयने लग्नेशो भौमः । अष्टमेशो बुधः । तौ स्थिरगौ तेनाल्पायुः । शनिचन्द्रौ चरर्क्षगौ तेन दीर्घायुः । लग्नं स्थिरम् । होरालग्नम्२।२।३८।२०द्विस्वभावम् । तेन दीर्घायुः । अत्र संवादत्वाद्दीर्घायुः । स्पष्टीकरणार्थं योगकर्त्तॄणां चतुर्णां योगः४३।२०।८६। चतुर्भक्तः१०।५०।४। इदं षट्त्रिंशता गुणितं३९०।२।२४त्रिंशता भक्तं लब्धं वर्षादिकम्१३।०।२८।४८। इदं षट्त्रिंशद्युतम्२२।११।१।१२- द्विसप्तत्या युतं जातं स्पष्टायुः९४।११।१।१२ इति ।

इति सूत्रार्थप्रकाशिकायां द्वितीये चतुर्थः पादः ।

---

अनेकसिद्धान्तविधिप्रणेता विचित्रसारस्वतसारवेत्ता ।
सुधाकराख्यो विदितः सुनेता गुरोर्गुरुर्मेविबुधप्रजेता ॥ १ ॥

होराशास्त्रे सदा निष्ठोऽयोध्यानाथोऽतिविश्रुतः ।
गुरुर्मेऽस्ति सुराराध्ये रामचन्द्रे कृतामतिः ॥

सिद्धान्तवैभवलसद्विबुधानां गणाग्रणीः ।
गुरुर्मे मैथिलवरो दीनानाथो विचक्षणः ॥

छपरामण्डलमध्ये डुमरीग्रामे पितामहो जयति ।
श्रीवनवारीनामा वावूरामाभिधः पिता तद्वत् ॥ १ ॥

एतेषां पादसंस्पर्शादाप्तबोधलवेन हि ।
कृत्वा जैमिनिसूत्रस्य व्याख्यां काश्यां मनोहराम् ॥

वियत्षडङ्कभूवर्षे वैक्रमीये घटे रवौ ।
रामयत्नेन सर्वेशे विश्वनाथे समर्पिता ॥

नमस्करोमि विबुधान् प्रार्थयामि पुनः पुनः ।
यद्यत्राशुद्धिसंवेशः शोधयन्तु विदो मुदा ॥

श्रीसं-१९६० फाल्गुनकृष्ण-१४ सोमे पूर्तिमगात् ।

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृ. । | पं. । |
|---|---|---|---|
| विचत्रा | विचित्रा | ३ | ६ |
| वृद्धस्यापि | बद्धस्यापि | ११ | १ |
| तस्यात्मकारका | अमात्यकारका | ११ | ११ |
| कथाफणीन्द्रस्य | कन्थाफणीन्द्रस्य | १४ | ११ |
| व्युत्क्रमगणना | ऽप्युत्क्रमगणना | १७ | १३ |
| यावद्दीशाश्रयं | तावद्दीशाश्रयं | १७ | २३ |
| कुजकेतु | कुजकेतू | १९ | ४ |
| स्वाद्गृहस्थत्वं | स्वगृहस्थत्वं | १९ | १३ |
| अभिगृहं | अलिगृहं | २० | २३ |
| आरूढलग्नभे | आरूढं लग्नभे | २२ | २ |
| अत्रापि वाद | अत्रापवाद | २२ | ४ |
| ततः स्वामी | ततस्वामी | २२ | २४ |
| जन्मलग्नसमं | जन्मलग्नं समं | २५ | १९ |
| चादिम् | चादिभम् | २५ | १९ |
| किमिरति | किमिति | २६ | १ |
| तर्द्दीष्ट | तर्हीष्ट | २६ | २ |
| यौजनीयम् | योजनीयम् | २६ | ३ |
| इति तत्र | इत्युक्तं तत्र | २८ | ४ |
| केमद्रम | केमद्रुमः | ४४ | ३ |
| निर्माण | निर्याण | ७९ | २४ |
| पृष्ठो | षष्ठो | ८२ | ४ |
| अप्राणि | प्राणि | ८४ | २१ |
| स्थूलान्तदंशा | स्थूलादर्शं | ९६ | ९ |